3·5

॥ हरिः ॐ तत्सत् ॥

नराय हरये नमः (भा० ८।१६।३४)

अन्योऽन्यमानिनः सर्वे, सर्वे सन्तु विमत्सराः।
स्वस्थाः स्वच्छाः समृद्धाश्च, सर्वे सन्त्वकुतोभयाः ॥

# चातुर्वर्ण्य-भारत-समीक्षा

राष्ट्रस्योन्नायकाः सर्वे, विश्वकल्याणभावुकाः।
स्वधर्मशालिनः सर्वे, सर्वे सन्त्वभयंकराः ॥


—: लेखकः :—

स्वामी महेश्वरानन्दगिरिः महामण्डलेश्वरः

( सुरतगिरिबंगला-गिरीशानन्दाश्रम-कनखल-हरिद्वार )
( संन्यासाश्रम-विला-पारला-बम्बई )
( बद्रिकाश्रम (नर्मदातट) मुं० दरियापुर, पो० चांदोद )

श्री २।१ ० ५० सि ६।११।६०.

हरिः ॐ तत्सत्

वन्दे विश्वेश्वरं विभुम् ।

अधःपातपराकाष्ठां प्राप्तस्यास्य समुन्नतेः ।
कालोऽयमागतो जीयाद् हिन्दुराष्ट्रमिदं पुनः ॥

# चातुर्वर्ण्य-भारत-समीक्षा



हरिद्वारकनखलवास्तव्य-श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रोत्रिय-ब्रह्मनिष्ठ-सकलनिगमागमशास्त्रनिष्णात-
स्वामि-महेश्वरानन्दगिरिमहामण्डलेश्वरप्रणीता



पण्डितस्वामिविद्यानन्दवेदान्तिस्वामिकृष्णानन्दाभ्यां
संशोधिता ।

कनखलसुरतगिरिबंगलामठस्य कोठारी-
श्रद्धेय-श्रीकैवल्यानन्दसरस्वतीस्वामिभिः प्रकाशिता

विक्रमसंवत्–२०२० ] [ ख्रिस्ताब्दः–१९६३

मूल्यं–एकरुप्यकम् ।

न पण्डिताः साहसिका भवन्ति,
श्रुत्वाऽपि ते सन्तुलयन्ति तत्त्वम् ।
तत्त्वं समादाय समाचरन्ति,
स्वार्थं च कुर्वन्ति परस्य चार्थम् ॥+

(बम्बई–विला–पारलानिवासिनः
श्रेष्ठिप्रवरस्य धर्मप्रियस्य श्रीजीवनदासगोविन्दजीसंपदितिशुभ-
नामधेयस्य श्रीलक्ष्मीसहचरस्य शुभद्रव्यसाहाय्येन मुद्रिता)

हे धीराः! बहुशास्त्रशीलनपराः! शान्ताः! क्षमाभूषणाः!
तप्तास्तीव्रशिखैर्भवाख्यगहने मात्सर्यदावानलैः ॥
एतस्मिन् सरसि प्रपक्षकमले शास्त्रोक्तिपाथोभरे ।
मग्नीभूय विधीयतां निजमनोदन्तावलः शीतलः ॥×

---

+आपाततः श्रुत्वा पठित्वैव च सहसा किमपि वक्तुं नोत्सहन्ते पण्डिताः, अपि त्वाद्योपान्तयोः पूर्णं विचारं कृत्वा तात्पर्यमवगत्यैव च स्वाभिप्रायं प्रकटयन्तीति भावः। तत्त्वं=रहस्यम् ।

×प्रपक्षकमले = प्रभूताः–अनेके पक्षा एव कमलानि यत्र तस्मिन् । शास्त्रवचांस्येव पाथः = पयः, तेन भरे = पूर्णे, 'कमलेन पयः, पयसा कमलम्, ताभ्याञ्च विभाति सरः' इत्युक्तत्वात् । एतस्मिन् = चातुर्वर्ण्यभारतसमीक्षाख्ये सरसि । दन्तावलः=हस्ती ।

# चातुर्वर्ण्य-भारतसमीक्षायाः सूचीपत्रम्



# प्रशस्तिः

( १ )

महेश्वरानन्दपदारविन्देष्वास्तां मदीया प्रणतिर्ह्यजस्रम् ।
यैर्वेदरत्नाकरमन्थनेन समुद्धृता वैदिकतत्त्वनिष्ठा ॥

( २ )

उपनिषच्छतकत्रयदर्शनात् परमहर्षतरंगलुठन्मनाः ।
प्रकटयाम्युपकारभरानहम्, ननु कया विधया भवताममून् ॥

( ३ )

असाधारणमौदार्यं चिराय स्मरणीयताम् ।
यायान्मुमुक्षुमनसि लोके च रमणीयताम् ॥

( ४ )

अग्रिमा ये प्रकाश्येरन्, ग्रन्था वेदार्थदर्पणाः ।
उपकुर्वन्तु संप्रेक्ष्य, तानप्यस्मिन् जने दयाम् ॥

( ५ )

करुणावरुणालयः प्रभुर्भवतां सन्ततमातनोतु शम् ।
इति त्र्यम्बकनाथपादयोरनिशं प्रार्थयते विनम्रधीः ॥

(त्र्यम्बकनिवासी-श्रीभालचन्द्रविनायक-मूले-शास्त्री)



श्रोत्रिय – ब्रह्मनिष्ठ – श्रीमत्परमहंसपरिव्राजकाचार्य – दार्शनिकसार्वभौम –
विद्यावारिधिन्यायमार्तण्ड – वेदान्तवागीश

श्री १००८ स्वामी महेश्वरानन्द जी महाराज महामण्डलेश्वर

# आमुखः

अन्तर्बहिर्भवलुण्ठक-पाटच्चर-प्रत्यर्थिनिकराद्यातङ्कपङ्कपरिहरणपूर्वकसुनियतसमाजव्यवस्थामन्तरा, जनजीवनौपयिकधनधान्यादिवस्तूत्पादनाऽऽदानप्रदानादिकमन्तरा च न कस्यापि राष्ट्रस्य चिरकालावस्थायिनी स्थितिः कथंचनापि संभावयितुं शक्येति तथाविधकार्यविधायि वर्गद्वयं राष्ट्रविधारकविधया सर्वत्रापेक्षितमिति निश्चप्रचम् । उभयोरपि तयोरध्यापनादिभिर्बुद्धिप्रदाता सामयिकेतिकर्तव्यतापरिदर्शयिता च सर्वमूलभूतस्तृतीयो वर्गस्तत्त्रितयसाहाय्यपरिचर्यादिपरायणश्चतुर्थश्चेत्याद्यन्ताभ्यां स्थितमिव च वर्गद्वयमतिरिक्ततया समपेक्षितमिति यथोक्तवर्गचतुष्टयस्य चातुर्वर्ण्यापरपर्यायस्यावश्यकता कस्यापि राष्ट्रस्य केनापि निर्मूलयितुमशक्या यावदिदं सृष्टिजातमभिप्रवर्तते ।

तदेवं गुणकर्मप्रविभक्तं चातुर्वर्ण्यं गुणकर्मप्रयुक्तं वा केवलजन्मप्रयुक्तं वा तदुभयप्रयुक्तं वेति विशये बुद्धसमयादारभ्यैव विवादः संवृत्त आसीत् । बुद्धस्तु 'यो न हिंसति भूताणि, यश्च सच्चं वदेत् सदा । तमहं ब्राह्मणं ब्रूमी' त्येवं विधैः पद्यैः केवलगुणादिप्रयुक्तं ब्राह्मण्यादिकं स्वीचकार । न वाऽद्यतनाऽऽर्यसमाजीयादिवद् वाङ्मात्रेण गुणकर्मप्रयुक्तब्राह्मण्यादिकं व्यवहारे च यथाजन्मवर्णव्यवस्था चेत्यासीत्तदा । किन्तु वर्णधर्मव्यवस्थोन्मूलनपरा बुद्धानुगामिनः कोटिशस्तदानीमभवन्, येऽद्यापि तां व्यवस्थां नोपगच्छन्ति, यदनुगामिनोऽम्बेडकरप्रभृतयोऽद्यत्वेऽपि तन्मतमाललम्बिरे ।

उत्तरोत्तरमभितः प्रवर्धमानं बुद्धमतं झञ्झावात इव हिन्दुमतमहीरुहमूलमुन्मूलयत् मटचीवृन्दमिव छन्दःपर्ण-कर्मपुष्पस्वर्गादिफलानि जर्जरयत् दावानलज्वालामालेव सकलवनसार-

सर्वस्वं ब्रह्मज्ञानं प्रज्वलयत् सकलमपि वैदिकधर्मं व्याकुलीचकार। समुद्रमिवाक्षोभ्यं तत् पराभावयितुं मुनयो महर्षय आचार्याश्च महान्तं शास्त्रार्थसंग्राममङ्गीकृत्य निरन्तरजागरूका अवतस्थिरे। बौद्धपराभूतये तदीयदर्शनशास्त्रं शिथिलयितुकामा गौतमप्रभृतयो महर्षयस्तन्मतं निरस्यन्तो नितरां यत्नमादधाना अपि सर्वतः प्रवर्धमानं बुद्धमतं निरोद्धुं न प्रबभूवुरिति तु षष्ठसप्तमशतकपर्यन्ततदीयोत्तरोत्तरवर्धमान – प्रचारादितोऽवगम्यते। सम्राजोऽशोकस्य काले एव भारतवर्षेऽस्मिन् प्रायोव्यापकरूपेण बुद्धमतप्रचारोऽजायतेतीतिहासेभ्यः परिज्ञायते। एवंविधसमये एव श्रीमच्छङ्कराचार्यकुमारिलभट्टप्रभृतयः सनातनधर्मधुरन्धरा अलौकिकाजेयबुद्धिप्रतिभादिसम्पन्ना वाडवा इव समुद्रं बुद्धमतं परिशोषयन्तः पर्वता इव झञ्झावातं बौद्धप्रसरं प्रतिरुन्धन्तः दिनकरखरकिरणा इव तिमिरनिकरं बौद्धदर्शनाज्ञानमपसारयन्तः परितः प्रचकाशिरे। तदानीं वर्णाश्रमहीन-बुद्धानुयायिनोऽधुनेवाऽस्पृश्यस्वरूपा अपि कथं हिन्दवः कृता इति ? तथ्यं तु विचारणीयमेव। न हि ते देशतो निष्कासिताः, प्राणघातेन हिंसिता वा। असंभवात्। तथा सति भारतमिदं जनहीनमेवाभविष्यत्; हिन्दुजातीयानां तदानीमत्यल्पसंख्यया स्थितत्वात्। बौद्धमतं समूलकाषं कषित्वा ते वर्णाश्रमप्रविभागभूरिगौरवं सनातनधर्मं प्रतिष्ठापयांबभूवुः।

एवं स्थिते सत्यपि नाद्यावधि विवादसमाप्तिरजायत। पुराणादिषु परःसहस्राणि तथाविधानि वाक्यानि कथाप्रसङ्गाश्चोपलभ्यन्ते, येषु कर्मणा जातेर्व्यवस्था सिद्ध्यति, परःशतानि च तथाविधानि वाक्यानि कथाप्रसङ्गाश्च परिदृश्यन्ते, येषु जन्मना जातेर्व्यवस्था निश्चीयते। तथा हि-चन्द्रवंशे पुरुरवसः

पुत्र आयुरभूत् । तस्य रम्भरभसगम्भीराक्रियाः पुत्रपौत्रादिक्रमेण बभूवुः । अक्रियस्य पुत्रा ब्राह्मणा अजायन्त । एवं क्षत्रवृद्धसुहोत्रगृत्समदशुनकशौनकास्तस्यैव तथा बभूवुः । शौनकस्य ब्राह्मणाः पुत्रा अभूवन् । एवं ययातिवंशे प्रस्कण्वस्य । ययातिवंशे एव रन्तिभारसुमतिरैभ्यादिक्रमेण गर्गशिनिगार्ग्यास्तत्पुत्रा ब्राह्मणाश्च बभूवुः । सूर्यवंशेऽपि नभगनाभागविरूपपृषदश्वरथीतरक्रमेणऽऽङ्गिरसा ब्राह्मणा उदपद्यन्त । नरिष्यन्तचित्रसेनादिक्रमजाताऽग्निवेश्यायनस्य च ब्राह्मणाः पुत्राः संभूताः । तत्रैव धृष्टस्य धार्ष्टाः ब्राह्मणाः, ऋषभदेवपुत्राणां तथात्वं प्रसिद्धमेव । मन्ये एतदेव सर्वं पूर्ववृत्तं परःसहस्रोदाहरणोपबृंहितमनुस्मृत्य बुद्धेन जन्मना वर्णव्यवस्था स्वीकृता न स्यात् ।

अपि च क्षेत्रप्राधान्यं वा बीजप्राधान्यं वा जन्मना जातिव्यवस्थाविषये स्वीकर्तव्यमित्यपि विवादास्पदम् । नहि गवाश्वजातिवद् ब्राह्मणक्षत्रियादयः स्वेतरजातीयकन्यासु बीजवपनं न कुर्वन्ति ?।

'विप्रान्मूर्धावसिक्तो हि, क्षत्रियायां विशः स्त्रियाम् । अम्बष्ठः शूद्र्यां निषादो, जातः पाराशवोऽपि वा ।। वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यां, विन्नास्वेष विधिः स्मृतः ।। ब्राह्मण्यां क्षत्रियात्सूतो, वैश्याद्वैदेहिकस्तथा । शूद्राज्जातस्तु चाण्डालः सर्वधर्मवहिष्कृतः।। क्षत्रिया मागधं वैश्यात्, शूद्रात्क्षत्तारमेव च । शूद्रादायोगवं वैश्या, जनयामास वै सुतम् ।। माहिष्येण करण्यां तु, रथकारः प्रजायते । असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ।। (या० स्मृ० १ । ९१–९५) ।

इति याज्ञवल्क्यवचनात्, सूतमागधचाण्डालादीनां सत्ययुगा-

दावपि प्रसिद्धे:, प्रतिलोमविवाहस्य विधिविरुद्धस्य माता-पितृभ्यां कन्यायाः कर्तुमशक्यत्वात् "दुर्वारे मकरध्वजे" इति न्यायमनुसृत्यैव क्वचिदज्ञातरूपेण क्वचित्पुत्रोत्पत्त्यनन्तरज्ञातरूपेण स्त्रीपुरुषमतिवैषम्यसंजातता निश्चीयते। तत्र शूद्रात् ब्राह्मण्यामयं जात इति परैरवगमे तस्य चाण्डालत्वमवधार्येत, जातिबहिष्कारश्च क्रियेत। परं जातिबहिष्कारभयविह्वला बाला नैतत्प्रकाशयेत्तदा वस्तुगत्या चाण्डाल एव ब्राह्मणत्वेन व्यपदिश्येत। यथा बृहस्पतिपत्नी तारा चन्द्राहिततेजो विवरीतुं बिभ्यती न प्रोवाच प्रथमम्। आश्वासितैव पश्चाज्जगाद। परासां नारीणां पुनः का कथा भवेत्? तदेवं ब्राह्मणत्वेन व्यपदिश्यमानस्य गुप्तचाण्डालस्य विवाहः पुनर्ब्राह्मण्या सह जायेतैवेति तदीयसुतः किंजात्या व्यवह्रियेत? न ह्यज्ञाते सति चाण्डालश्चाण्डालो न भवति। न ह्यग्निरग्नित्वेनाज्ञातो नाग्निर्भवति। एवंविधवैकल्यसहस्रमुपलभ्य केचन क्षेत्रप्राधान्यमुररीचक्रुः। अपरे पुनर्बीजप्राधान्यम्। परमद्यावध्यस्य निर्णयस्तु नैव जातः। तदिदमखिलमवलोक्य बुद्धो जन्मना जातिमेव नोररीचकार।

तमिममखिलमपि दोषं परिजिहीर्षुः कुमारिलभट्टाचार्यस्तावदित्थमुपपत्तिं करोति-मातापितृबन्धुबान्धवाः स्वीयकन्याः सर्वथा रक्षयितुं नित्यमेव प्रयतन्ते। तथा च बहुलतरं प्रतिलोमविवाहो नैव जायते, यत्र क्वचित्तथा सम्पद्येतापि तत्राल्पं विषं कूपादौ बहुलजले पतितं विषभावमेव जहाति यथा तद्वदेव तद्दोषमोषोऽपि भवेदित्यादि।

परमद्यत्वे तु विषं बहुलं, जलं चाल्पमिति स्थितिरुत्पन्ना दृश्यते। तस्यां स्थितौ च जन्मना जातिवादो वा कर्मणा जाति-

वादो वा उभयतो जातिवादो वा स्वीक्रियतामिति प्रथमोपदर्शितविशयः पुनरुत्थितो भवति । निर्जातिवादो वा स्वीकरणीय इति कोटचन्तरमपि चतुर्थमुदतिष्ठत् । प्रायस्तरां न जन्मना जाति र्विषस्याधिक्यात् । नापि कर्मणा । 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥' इत्यादिमन्वादिवचनाद्वेदाध्ययनादिशून्यानां बहिष्करणीयत्त्वात्तेषामेव संख्याधिक्याच्च ब्राह्मणादिजातेर्दुर्लभत्वापत्तेः । अत एव नोभयतोऽपि । नापि निर्जातिवादो युक्तः, हिन्दुधर्मत्वव्याघातापत्तेः । इत्येवं विशये वर्णाश्रमविभागविषये पूर्वपक्षः सिद्धान्तश्चावगन्तव्यो भवति । तदर्थं च सर्वेषामुक्तवादानां विवरणमावश्यकमिति कृत्वा **श्रीमत्परमहंसपरिव्राजकाचार्यमहामण्डलेश्वर-श्रीमहेश्वरानन्दस्वामिपादाः वेदवेदान्तदर्शनेतिहासपुराणाद्यखिलशास्त्ररहस्यविवेचनविचक्षणाः चातुर्वर्ण्यभारतसमीक्षाभिधानं ग्रन्थमिमं निरमिमत** । अत्र च वर्णद्वयवादः, एकत्र चातुर्वर्ण्यवाद इत्येवं वादान्तराण्यपि प्रदर्शितानि सन्ति । एवं बहुषु वादेषु गुणदोषाश्च बहुलं निर्दशिताः सन्ति । चातुर्वर्ण्यसमीक्षया सह भारतसमीक्षापि दोषनिवारणपूर्वकगुणाधानाय प्रियस्य भारतराष्ट्रस्याभ्युदयाय च कृता । मानवार्षभाष्यादिविधिग्रन्थेभ्यो यद् बहुमूल्यं साहाय्यमत्र संपादितं, तदर्थं स्वामिपादाः विनम्रकृतज्ञतामप्यावेदयन्ति ।

यद्यपि सकलवेदपुराणादिचिरकालपर्यालोचनानुसन्धानादिसापेक्षेऽस्मिन् विषये उपवासादिक्षीणशक्तेर्मम भूमिकादिविरचनयोग्यता नासीत्तथापि महतां वचो नानादरणीयमिति कृत्वैव स्वामिपादाज्ञप्तोऽहमेतल्लेखने प्रवृत्तः ।

अन्ते चेदमभिदध्महे "श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नैको

मुनिर्यस्य मतं न भिन्नं ('न मानं' 'प्रमाणमि' ति पाठान्तरे) 'भिन्नरुचिर्हि लोकः' इत्यादिवचनमनुसृत्य भिन्नरुचीनां लोकानां कृते परस्परभिन्नाः शास्त्रसिद्धान्ताः स्वामिपादैः तटस्थभावेन शास्त्राणामौदार्यप्रदर्शनाय प्रदर्शिता अभ्युदयनिःश्रेयसकामैर्यथा-योग्यमुपादीयन्तामिति ।

विद्वदनुचरः—
स्वामी काशिकानन्दः
व्याकरणन्यायवेदान्ताचार्य्यः काशीविश्वविद्यालयतः
पुरस्काररूपेणानेकसुवर्णादिपदकविजेता,
व्याख्यानशास्त्रार्थमहारथी च

## तेनैव रूपेण चतुर्भुजेन (गी० ११।४६)

लेखक — महामण्डलेश्वरः पूज्यपादः
स्वामी महेश्वरानन्दमहाराजः

'तेनैव रूपेण चतुर्भुजेन' इत्यत्र तेनैव=पूर्वपरिचितेन लोक-प्रसिद्धेन मानुषरूपेण, इत्यर्थकरणे 'चतुर्भुजेन' इति विशेषणं विरुद्धचेत । यतो मानुषरूपं द्विभुजात्मकमेव लोकप्रसिद्धं पूर्व-परिचितमस्ति, न तु चतुर्भुजम् । न च तेनैव=शास्त्रप्रसिद्धेन, इत्यर्थकरणे चतुर्भुजेनेति विशेषणं संगच्छेत, इति वाच्यम् । 'दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ! इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥' (गी० ११।५१) इति वक्ष्यमाणवचन-विरोधात् । अत्र किल स्पष्टं लोकप्रसिद्धमर्जुनपरिचितं द्विभुजं मानुषरूपमेव स्वदर्शनेन चेतोवैकल्यनिवारणे, प्रकृतिस्थैर्यसंपा-

दने च निदानमवगम्यते, न तु चतुर्भुजं शास्त्रप्रसिद्धं देवरूपम्। न च कृष्णभक्तोऽर्जुनः सर्वदा भगवतः कृष्णस्य रूपं चतुर्भुजमेव पश्यति, अतस्तदेव पूर्वपरिचितं रूपं द्रष्टुं वाञ्छतीति वाच्यम्। एवं सति 'अजानता महिमानं तवेदं, मया प्रमादात् प्रणयेन वा पि। यच्चावहासार्थमसत्कृतोऽसि, विहारशय्यासनभोजनेषु॥' (गी० ११ ४१-४२) इति वचनं विरुद्धयेत। सर्वदा चतुर्भुजं देवरूपं पश्यतोऽर्जुनस्य महिम्नोऽज्ञातत्वकथनं, अत एव तत्प्रयुक्त-मवज्ञातत्वपरामर्शञ्च कथमपि न संगतं भवति। अतः सर्वदा-ऽर्जुनो भगवतश्चतुर्भुजमेव रूपं पश्यतीति कथनं सर्वथाऽलीक-मेव। न च विश्वरूपदर्शनसमये भगवता कृपयाऽर्जुनाय चतुर्भुजं विष्णोर्देवस्य रूपं 'किरीटिनं गदिनं चक्रिणञ्च तेजोराशिं सर्वतो दीप्तिमन्तम्।' (गी० ११।१७) इति वचनेन प्रादर्शि, अत एव तदेव सौम्यं चतुर्भुजमर्जुनस्य पूर्वपरिचितमभूदिति स्वीकारे, 'तेनैव रूपेण चतुर्भुजेन' इति वचनमविरुद्धं संपद्येत, तथा सति 'तदेव मे दर्शय देवरूपं' (गी० ११।४५) इत्यत्र देवस्य=विष्णोः रूपं चतुर्भुजं मह्यं दर्शय, इत्यर्जुनप्रार्थनाऽपि संगता भवतीति वाच्यम्। 'दृष्ट्वेदं मानुषं रूपमि-' (गी० ११।५१) ति वच-नविरोधात्। तदेव मे दर्शय देव! रूपमित्यत्र हे देव! इति सम्बोधनमस्ति, न तु देवरूपं समस्तं पदमस्ति, तथैव प्रायः सर्वे-र्व्याख्यातृभिरङ्गीकृतत्वात्। चतुर्भुजरूपस्य वैष्णवस्य विश्वरूप-दर्शनसमयेऽर्जुनस्य परिचयो जातश्चेत्, तदा 'आख्याहि मे को भवानुग्ररूपः' (गी० ११।३१) इत्यर्जुनस्य प्रश्नः कथमपि न संगतो भवति, यतो विष्णोः सौम्यस्य चतुर्भुजस्यैवेदमत्युग्ररूपं कालात्मकमस्तीति विज्ञातप्रायस्त्वात् 'को भवान्?' (गी० ११।३१) इति प्रश्नस्य सर्वथाऽनुपपत्तिरेव स्यात्। अतो वि-

स्वरूपदर्शनसमयेऽर्जुनेन चतुर्भुजरूपं यन्मनोरमं दृष्टं, तदेव पुन र्दर्शनाय वाञ्छतीति कथनं सर्वथा पूर्वापरविरुद्धमेव ।

अतस्तेनैव रूपेण चतुर्भुजेन, इत्यत्र विरोधपरिहाराय 'चतुर्भुजेन' इत्यस्य 'चत्वारो भुजा विद्यन्ते यस्य सः चतुर्भुजः' तेनेति व्याख्यानं परिहाय 'चत्वारो भजन्ते मां जनाः सुकृतिनोऽर्जुन !। आर्तो जितासुरर्थार्थी ज्ञानी च भरतर्षभ !' (गी० ७।१६) इत्यत्राभिहिताः चत्वार आर्तादयो भक्ताः सन्ति, तैश्चतुर्भिर्भक्तै र्भुज्यते=सेव्यते, इति चतुर्भुजस्तेन । यतो भगवतो मानुषं रूपं द्विभुजं वंशीवादनशीलमेव सर्वेषां चतुर्णां भक्तानामेव सर्वथा भजनीयं-ध्यातव्यं सर्वदा द्रष्टव्यञ्चास्ति, इति श्रीमद्भागवतसमालोचनेनाप्यवगम्यते ।

'आत्मारामास्तु मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ।।' (भा० १।७।१०) इत्यनेन भागवतवचनेन ज्ञानिनां मुनीनामपि प्रेम्णाऽनन्येन सेवनीयं द्विभुजमेव रूपमस्ति, 'चुकुज वेणुं बर्हापीडं नटवरवपुः··· ···बिभ्रद्वासः, (भा० १०।२१।२–५) इत्यनेनापि तदेव रूपं शुकदेवादीनां ज्ञानिनामपि चेतसश्चमत्कारमस्ति । अत एवाचार्य्यमधुसूदनसरस्वत्यो महाज्ञानिनोऽपि द्विभुजमेव रूपं प्रेम्णा 'वंशीविभूषितकरान्' इत्यादिना परतत्त्वतया जानन्ति, एवमार्तभक्ता द्रौपदी श्रीकृष्णप्रिया, जिज्ञासुभक्तोऽर्जुन उद्धवश्च । अर्थार्थिभक्त उग्रसेनादिश्च तदेव मनोहरं मानुषरूपमनन्यप्रेमऽयोजकं सततं द्रष्टव्यतया वाञ्छन्तीति सर्वमनाविलम् ।



श्रीविश्वनाथो विजयतेतराम् ।

हरिः ॐ तत्सत्

# चातुर्वर्ण्य-भारत-समीक्षा

## मंगलाचरणं-निवेदनञ्च

प्रणम्य परमात्मानं, सच्चिदानन्दमद्वयम् ।
चातुर्वर्ण्यविचारोऽयं, क्रियते बोधवृद्धये ॥१॥
विद्वद्भिर्मतवैचित्र्यं, वर्ण्यते रुचिभेदतः ।
नहि सर्वत्र रुच्यादौ, दृश्यते चैकरूपता ॥२॥
शास्त्रयुक्तिवचोवृन्दैः, स्वपक्षं स्थापयन्ति ये ।
तेषां विभिन्नपक्षाणां, क्रियतेऽतः प्रदर्शनम् ॥३॥
नास्माभिर्हि मते कस्मिन् , क्रियतेऽभिनिवेशता ।
यतो दृश्यस्य विश्वस्य, नामरूपक्रियात्मनः ॥४॥
परिवर्तनशीलत्वं, चास्यानिर्वचनीयताम् ।
प्राहुरज्ञानयोनित्वं, विद्वांसस्तत्त्ववेदिनः ॥५॥
नान्यं मन्यामहे किञ्चित्, शुद्धे ब्रह्मणि निर्भराः ।
इति तथ्यं वचो बुद्ध्वा, विरमामो विवादतः ॥६॥
तत्र तावदिदं श्रौतं, ब्राह्मणोऽस्येति शोभनम् ।
वचो वयं पुरस्कृत्य, दर्शयामो यथामति ॥७॥
व्याख्याभेदरहस्याणि, विद्वद्भिर्दर्शितानि वै ।
भारतस्यास्य राष्ट्रस्य सहैव च समीक्षणम् ॥८॥
क्रियते संघशक्तेश्च लाभाय दोषनष्टये ।
यत्नेनानेन सर्वात्मा, तुष्यतु विश्वभावनः ॥९॥



# मन्त्रार्थ-विवेचनम्

## ( पुरुषमुखादिरूपेण ब्राह्मणादिवर्णनम् )

अस्य पुरुषस्य विराजो मुखं किमासीत् ? किं बाहू ऊरू चास्ताम् ? पादावपि किमास्ताम् ? इति प्रश्नानामुत्तराण्याह-भगवान् वेदः—

ॐ ब्राह्मणोऽस्य मुखमासीत्, बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥
( शु० य० ३१-११ ऋ० १०-९०-१२ अथर्व० १९-६-६ तै० आ० ३-१२-५ )

अस्य = पुरुषस्य प्रजापतेर्निखिलब्रह्माण्डविग्रहस्य मुखं ब्राह्मण आसीत् । राजन्यः = क्षत्रियः बाहू कृतः = बाहुरूप आसीत्, अस्य = पुरुषस्य यत् = यौ ऊरू तद्रूपो वैश्य आसीत्, पद्भ्यां शूद्रोऽजायत इति स्पष्टमेव ।

अत्र प्रजापते र्मुखादिरूपेण प्रतिपाद्यमानाः ब्राह्मणादयः के सन्ति ? विषयेऽस्मिन् भूयांसः पण्डिताः विवदन्ते । महता समारम्भेण शास्त्रप्रमाणतर्कादिभिः स्वं स्वं पक्षं साधयन्ति । कीदृशास्तेषां पक्षाः ? इति समीक्षार्थमत्रोपक्षिप्यन्ते । अत एव मुखादिरूपास्ते आसन् ? इत्यस्य किं तात्पर्यं ब्राह्मणादिसमाज-हितकरम्? अस्मद्भारतराष्ट्रस्य संघट्टनाभ्युदयविद्याशवितसमृद्धयादिप्रयोजकञ्च ?। इति बहवः सामान्यजना अपि विजिज्ञासन्ते । तेषां जिज्ञासाशमनाय कश्चन प्रयत्नोऽस्माभिर्विधीयते । 'महाजनो येन गतः स पन्था' 'नैको ऋषि र्यस्य मतं न भिन्नम्' इति न्यायेन तेषां विविधाः पक्षाः—कुत्र कुत्र स्वकीया रुचिः समीचीनतयोपढौकत इति सर्वेषां समीक्षणाय प्रदर्श्यन्ते ।

## जन्मना जातिवादः

तत्र केचन जन्मना जातिवादिनो मन्यन्ते-योऽयं ब्राह्मणत्व-जातिविशिष्टः पुरुषः, सोऽयमस्य प्रजापतेर्मुखमासीत्=मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः = क्षत्रियत्वजातिविशिष्टः, स बाहुत्वेन निष्पादितः=बाहुभ्यामुत्पादित इत्यर्थः। तत्=तदानीं, यत् = यौ ऊरू आस्तां, तद्रूपो वैश्यः = वैश्यत्वजातिविशिष्टः सम्पन्नः, ऊरुभ्यामुत्पन्न इत्यर्थः। तथा पद्भ्यां शूद्रः अजायत= उत्पन्नः। इयं च विराजो मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिस्तैत्तिरीयसंहितायाः सप्तमकाण्डे-'स मुखतस्त्रिवृतं निरमिमीत' इत्यादिना विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्तज्जातिविशिष्टानामुत्पत्तिपरत्वेनैव योजनीये इति।

अत एव परमेश्वरेणैव ब्राह्मणादयो वर्णा विनिर्मिताः, न तु पूर्वं केनापि व्यक्तिविशेषेण स्वतो वा गुणकर्मानुसारेण व्यवस्थापिताः, न चेदानीं व्यवस्थापयितुं शक्याः सन्ति। यच्च भगवता सृष्टं, नैव तदन्येन निर्मातुं शक्यं भवति। भगवता सर्वेश्वरेण सूर्यचन्द्रादयः सृष्टाः, ते किमन्येन स्रष्टुं शक्यन्ते?। अत एव शास्त्रप्रसिद्धानां जात्यन्तरविशिष्टानां देवापिविश्वामित्रवसिष्ठादीनामपि स्वकीयतपःप्रभावात् ब्रह्मर्षित्वमेव प्राप्तं, न प्रशस्तब्राह्मणत्वजातिस्तैः संलब्धा। सति चैवं गीतासु भगवता 'चातुर्वर्ण्यं मया सृष्टम्।' ( गी० ४-१३ ) इत्युक्तं सुतरां संगच्छते। 'शमो दमस्तपः शौचं' ( गी० १८-४२ ) 'ब्राह्मणक्षत्रियविशां' ···· कर्माणि प्रविभक्तानि' ( गी० १८-४१ ) इत्यादीनि भगवद्वचांसि ब्राह्मणस्य कर्माणि शमादीनि स्वाभाविकानि सन्ति, नैव पुनः शमदमादिगुणविशिष्टो ब्राह्मणो भवतीति प्रत्याययन्ति।

'जन्मना जायते शूद्रः' इत्यादीनि हि वचांसि शूद्रपदेन शूद्रसमत्वमेव बोधयन्ति, न तु वस्तुगत्या ब्राह्मणादिभ्यो ब्राह्मण्यादिषु जायमानानामर्भकाणां शूद्रत्वम्। एतेन—'संध्यां नोपासते यस्तु, ब्राह्मणो हि विशेषतः। स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते।' (दक्षस्मृति० २-३२) 'यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम्। इह जन्मनि शूद्रत्वं, मृतः श्वा चैव जायते।' (अङ्गिरास्मृतिः ६-७) 'अनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति मानवः।' (लघु-आश्वलायनस्मृतिः ७८-७) इत्यादीनि स्मार्त-वचनान्यपि व्याख्यातानि। एष्वपि पूर्वोक्तवत् शूद्रपदेन शूद्रसाम्यमेव ज्ञेयम्। एवं 'क्षत्रियपुत्रा ब्राह्मणा बभूवुः।' 'द्वौ वैश्यौ ब्राह्मणतां गतौ' इत्यादिवचनेष्वपि ब्राह्मणसाम्यमेव वेदितव्यम्, न तु ब्राह्मणत्वजातिप्राप्तिर्ज्ञेया, सा तु ब्राह्मणाद् ब्राह्मण्यामेव जायमानस्यैव प्राप्ता भवति, नान्येषाम्।

अत एव महाभारतस्यानुशासनिके पर्वणि तृतीयाध्याये पितामहो भीष्मः पृष्टः—'क्षत्रियो यदि वा वैश्यः, शूद्रो वा राजसत्तम !। ब्राह्मण्यं प्राप्नुयात् केन ? तन्मे ब्रूहि पितामह !। तपसा वा सुमहता कर्मणा वा श्रुतेन वा। ब्राह्मण्यमथ चेदिच्छेत् कथं शक्यं ? पितामह !। (३-७-८) इति। भीष्म उवाच— 'ब्राह्मण्यमतिदुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः। परं हि सर्व-भूतानां स्थानमेतद् युधिष्ठिर !॥ बह्वीस्तु संस्मरन् योनीः जायमानः पुनः पुनः। पर्याये नाम कस्मिंश्चिद् ब्राह्मणो नाम जायते॥'(३-१२) इति। अत्र हि-एकस्मिन्नेव जन्मनि ब्राह्मण-त्वजातेः क्षत्रादिभिरप्राप्यत्वं सूच्यते। एवं तत्रैव त्रयोविंशत्य-धिकशततमाध्याये श्रीमन्महेश्वरेण प्रतिपादितम्-'स्वभावादेव

विद्यन्ते चत्वारो ब्राह्मणादयः । एकजात्या सुदुष्प्रापमन्यवर्ण-त्वमागतम् ।।' इति । अत्र खलु परंपरया व्यवह्रियमाणानां ब्राह्मणादीनां स्वाभाविकमेव पक्षिणामुड्डयनवत् वानराणामुल्लच्छनवच्च ब्राह्मणत्वादिकं विद्यते, न तु गुणकर्माद्युपाधितोऽभिनवं लब्धमिति स्पष्टतया सूच्यते। 'एवं जातिविपर्यासः प्रेत्यभावे भवेन्नृणाम् । अन्यथा तु न शक्यं तत् लोकसंस्थितिकारणात् ।।' इति अत्र हि गुणकर्मभिरन्यस्मिन् जन्मनि जात्यन्तरं प्राप्तुं शक्यते, न त्वस्मिन्नेव जन्मनीति स्फुटमवगम्यते । सति चैवं 'ब्राह्मणः शूद्रो भवति, शूद्रो ब्राह्मणो भवति ।' इत्यादिवचनानि जन्मान्तरमभिप्रेत्यैव जातिविपर्यासं प्रतिपादयन्ति, न त्वस्मिन् जन्मनीति प्रत्येतव्यम् ।

अपि च 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा' (छां० ५-१०) इति पुनर्जन्मविषयिणी छान्दोग्यश्रुतिः—ब्राह्मणादियोनिं प्रशंसन्ती योनिलक्षणजन्मकृतं ब्राह्मणत्वादिकं स्पष्टमभ्युपगच्छति । अत एव योन्युत्कर्षमभिप्रेत्यैव महर्षिपराशरोऽपि सुस्पष्टमाह-'दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः । कः परित्यज्य दुष्टां गां, दुहेच्छीलवतीं खरीम् ।।' इति । अभिहितश्चायमर्थो मनुनाऽपि—'अविद्वांश्चैव विद्वांश्च, ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाग्नि दैवतं महत् ।।' (९-३१७) इति । तस्माज्जन्मनैव वर्णभेदः सुप्रतिष्ठित इत्यभ्युपगन्तव्यम् । अत एव जन्मनैव तत्तद्वर्णोचितनामकरण-नियमोऽप्याह—भगवान् मनुः—'मङ्गल्यं ब्राह्मणस्य स्यात्, क्षत्रियस्य बलान्वितम् । वैश्यस्य धनसंयुक्तं, शूद्रस्य तु जुगुप्सितम् ।।' (२-३१) इति । तत्तद्योनिजन्मलाभात् ऋते जातमात्रस्य शिशो

दशमेऽहनि नामकरणसमये किं तस्य ब्राह्मणत्वादिसाधकं स्यात् ? न हि तदानीं गुणकर्मादयः शक्यसंभवाः। तस्माद् ब्राह्मणादिकुलजानामेव ब्राह्मणाद्युचितं नाम मनुनाऽभिप्रेतं तत् 'जन्मसिद्धा एव ब्राह्मणादयो वर्णाः' इति विज्ञापयति।

## गुणकर्मवादः

अपरे तु ब्राह्मणादिशब्दाः गुणशब्दा एव न जातिवाचकशब्दाः, इत्यत्र व्याकरणमहाभाष्यकाराणां भगवतां पतञ्जलिमहर्षीणां—'सर्वे एते शब्दाः गुणसमुदायेषु वर्तन्ते—ब्राह्मणः क्षत्रियो वैश्यः शूद्रः इति' ( अष्टाध्यायी. २-२ ६ ) इति प्राचीनतरं वचनं प्रमाणत्वेनोपन्यस्यन्तः तपःश्रुतादिगुणकर्मसमुदायनिबन्धनैव वर्णव्यवस्था महाभाष्येऽपि प्रोक्तेति मन्वानाः एवं पूर्वोक्तं श्रौतमन्त्रं व्याचक्षते-अस्य=परमेश्वरस्य ब्रह्माण्डविग्रहस्य ब्राह्मणः=ब्राह्मणत्वप्रयोजकशमदमादिगुणविशिष्टो ब्रह्मभवितुकामः सत्त्वगुणबहुलो वेदादिविद्यासम्पन्नः परमेश्वरोपासको मुखमासीत्=मुखस्थानीयो मुख्यः सर्वोत्तम आसीत्। यथा मुखं ज्ञानप्रधानमितराङ्गापेक्षया श्रेष्ठं, तथाऽस्यापि ज्ञानप्रधानत्वाच्छमादिगुणैः श्रेष्ठत्वाच्च मुखत्वव्यपदेशः, अत एव 'अथ य एतदक्षरं गार्गि ! विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः।' ( बृ० उ० ३-८-१० ) इत्यादिश्रुतिषु ज्ञाननिबन्धनो ब्राह्मण्यव्यपदेशः संगच्छते। तथा राजन्यः=शौर्यादिगुणविशिष्टः सत्त्वोपसर्जनरजोबहुल, बाहू कृतः=बाहुस्थानापन्नत्वेन सम्पादितः। यथा बाहुर्बलप्रधानः तथाऽयमपि। तथा, अस्य=पुरुषस्य यत्=यौ, ऊरू तत्=तद्रूपः-तत्स्थानापन्नः, वैश्यः=कृषिवाणिज्यादिकर्मविशिष्टो धनसञ्चयप्रधानः—तमउपसर्जनरजोबहुलः-ऊरुत्वेन सम्पादितः। यो यत्र तत्र पुनः

पुनर्विशति—प्रविशति कार्यार्थमसौ विट्—तदपत्यं वैश्य इति व्युत्पत्तेः, तथाऽस्य पद्भ्यां=यौ पादौ विभक्तिव्यत्ययः—'किमूरू पादा उच्येते' (शु० य० ३१-१०) इति प्रश्नोपक्रमानुरोधात् पञ्चमी प्रथमार्थां । पादस्थानीयः शूद्रः=परिचर्याशिल्पकौशल्यपरिश्रमत्वादिगुणविशिष्टो रजउपसर्जनतमोबहुलः, अजायत=अकल्पयत । एवमेते ब्राह्मणादयः तत्तद्गुणकर्मविशिष्टा एव मुखप्रभृतयः—अवयवा अस्य पुरुषस्य ब्रह्माण्डविग्रहस्य प्रजापतेः विद्यन्ते इति कल्प्यते इति ।

## देवापिवृत्तान्तः

एवं व्याचक्षाणास्ते—पूर्वं ब्राह्मणादिवर्णविभागः तत्तद्गुणकर्माण्यवलम्ब्यैव विहितः, इत्यत्र नैकविधानि वेदादिशास्त्राणां प्रमाणान्युपहरन्तो वदन्ति । तथाहि-तत्र तावद् ऋग्वेदसंहितायामित्थमाम्नायते—'आर्ष्टिषेणो होत्रमृषि निषीदन् देवापिर्देवसुमतिं चिकित्वान् । स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि । यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् । देवश्रुतं वृष्टिवनिं रराणो बृहस्पति र्वाचमस्मा अयच्छत् ॥' (ऋ० सं० १०-९८-५-७) इति । अयमक्षरार्थः—आर्ष्टिषेणः=ऋष्टिषेणस्य पुत्रः-देवापिः-प्राक्क्षत्रियपुत्रः सन् संप्रति ऋषिः=पुरोहितो ब्राह्मणः सन् देवानां कल्याणीं मतिं=स्तुतिं चिकित्वान्=जानन् होत्रं=होतु र्ब्राह्मणस्य कर्म कर्तुं निषीदन्=निषण्णो भवति । स उत्तरस्मात्=उपरि वर्तमानाद्-अन्तरिक्षाख्यात्-समुद्रात्, अधरं=अधो वर्तमानं, पार्थिवं=पृथिव्यामवस्थितं समुद्रं, अभि=प्रति, दिव्याः=दिविभवाः, वर्ष्याः=वर्षप्रभवाः अपः=जलानि, असृजत्=सृजतु संपादयतु । यत्=यदा, देवापिः-आर्ष्टिषेणः, शंतनवे=स्वभ्रात्रे कौरव्याय,

पुरोहितः सन्, होत्राय=होत्रार्थं वृतः सन्, देवश्रुतं=देवा एनं शृण्वन्तीति देवश्रुत्-तं, तथा वृष्टिवनिं=वृष्टियाचिनं बृहस्पतिं=देवगुरुं, अदीधेत्=अन्वध्यायत्=ध्यानेन प्रसादयामास। स च रराणः=रममाणः-स्तुतिजपध्यानादिना प्रसीदन्-प्रसन्नो भूत्वा बृहस्पतिः-देवः, अस्मै देवापये, वाचं='अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते! अनमीवामिषिराम्।' (ऋ० १०-९८-३) इत्यनेन प्राक् प्रार्थितां स्तोत्रात्मिकां अयच्छत्=प्रदत्तवान। हे बृहस्पते! देवगुरो! त्वं कृपया अस्मे=अस्मासु, द्युमतीं=दीप्तिमतीं वाचं=स्तुतिलक्षणां आसन्=अस्मदीये आस्ये मुखे, धेहि=स्थापय। कीदृशीं वाचं, अनमीवाम्=अमीवा=दोषो विविधः तद्रहिताम् तथा इषिरां=गमनशीलां-अभीष्टलाभसंपादिकाम्। यया स्तुतिलक्षणया वाचा देवान् इष्ट्वा वृष्टिकामाय शन्तनवे, यथेष्टमुदकं दातुं वयं प्रभवाम इति भावः।

व्याख्यातमेतन्निरुक्ताचार्य्येण महर्षिणा यास्केनापि-तत्रेतिहासमाचक्षते-देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः, सः शन्तनुः कनीयान् अभिषेचयांचक्रे, देवापिस्तपः ब्राह्मणधर्मं प्रतिपेदे, ततः शन्तनोः राज्ये द्वादशवर्षाणि देवो न ववर्ष, तमूचुर्ब्रह्मविदो ब्राह्मणाः, अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं, तस्मात्ते देवो न वर्षतीति, स शन्तनुः देवापिं शिशिक्ष राज्येन, तमुवाच देवापिः पुरोहितस्तेऽसानि, याजयानि च त्वेति, तस्यैतद्वर्षकामसूक्तं तस्यैषा भवति।' (नि० २-१०) इति। अस्यायमर्थः-इति हैवमासीदिति यः कथ्यते स इतिहासः। कौरव्यौ=कुरुवंशप्रभवौ क्षत्रियौ, तयोरेको यः कनीयान् शन्तनुनामा स आत्मानमभिषेचयांचक्रे=

अभिषेचितवान् । सोऽभिषिक्तः सन् राजा=भूपालो बभूव । इतरः=पुनर्ज्येष्ठो भ्राता देवापिः ब्राह्मणधर्मं तपः प्रतिपेदे=गृहीतवान् । स किल तीव्रेण तपसा ब्राह्मणत्वमापेदे विश्वामित्रवत् । ततस्तेनापचारेण ज्येष्ठातिक्रमजेन शन्तनोः राज्ये=राष्ट्रे देशे द्वादशवर्षाणि देवः=मेघो न ववर्ष । अवर्षति देवे शन्तनुं राजानं ऊचुः=उक्तवन्तो ब्राह्मणाः ब्रह्मविदः, ज्येष्ठं भ्रातरमन्तरित्य=अतिक्रम्य अभिषेचितं=अभिषेक आत्मनः कारितो यतस्त्वया, तस्मात्तेन मर्यादाऽतिक्रमेण दोषेण ते=तव राज्ये देवः पर्जन्यो न वर्षतीति । स एवमुक्तः शन्तनु र्देवापिं स्वकीयज्येष्ठभ्रातरं शिशिक्ष=पुनः पुनः शशास, 'भवानेव राज्यं गृह्णातु' इति प्रार्थनां कर्तुं-अभिगतवानित्यर्थः । कथं ? राज्येन अभ्युद्यतेन, तेनार्थ्यमानो देवापिरुवाच, कामं-यथेष्टमहं पुरोहितस्तेऽसानि=भवानि, याजयानि च त्वां वार्षिकेण-यज्ञ-कर्मणा यजनं कारयाणि, न च राजा भविष्यामि, भवानेवास्तु राजा, अहं तु ब्राह्मणोऽभवमित्यभिप्रायः । तस्य देवापेः एतत् वर्षकामस्य सूक्तमाविरभूत् । तत्र तस्य समुद्राभिधानस्य संदिग्धस्य प्रविभागप्रदर्शनाय एषा=निर्वाचिका ऋक् भवति । यत्=यस्मात्, देवापिः शन्तनवे राज्ञे पुरोहितः । पुरोहितो ह्येवाग्निकर्मणि यज्ञादौ व्याप्रियते, शान्तिपौष्टिकाभिचारकेषु कर्मसु पुर एनं दधति राजानः पुरस्कुर्वन्तीत्यर्थः । स पुरोहितः सन् देवापिर्होत्राय=होतृकर्मणे-वर्षार्थीये कर्मणि वृतः सन् कृपयन=कृपायमाणो राज्ञेऽदीधेत्=अन्वध्यायत् वृष्टिर्भवेदिति । तं देवश्रुतं=देवापिमेनं वृष्टिवनिं=वृष्टियाचिनं मत्वा रराण=ददत्, रातिः दानार्थे स्मरणात् । इह बृहस्पतिस्तस्मिन्नेव कर्मणि ब्रह्मत्वेऽवस्थितः सोऽस्मै वर्षसाधिकां वाचमयच्छत्=अददादि-

त्यर्थः। तया वाचा तदनुगृहीतया स्तुतिरूपया देवान् स्तुत्वा तेभ्यो वर्षमलभतेति समस्तार्थः। एतेन तपः प्रभावात् स्वयं-प्रतिभातवेदत्वलक्षण-ऋषित्व-पुरोहितत्व-याजनकर्तृत्वादिप्रतिपादनेन-आर्ष्टिषेणस्य देवापेः क्षत्रियस्यापि गुणकर्मैकनिबन्धनं प्राप्तं मुख्यं ब्राह्मण्यं सुस्पष्टं सूच्यते। सति चैवं स्पष्टतया देवापिं ब्राह्मणतया मन्वानो भगवान् वेदस्तं ब्राह्मणकर्मकरणायेत्थमाज्ञापयति-'निषीद होत्रमृतुथा यजस्व देवान् देवापे! हविषा सपर्य।' ( ऋ० १०-९८-४ ) इति। हे देवापे! पुरोहित! ऋषे! त्वं होत्रं निषीद=आर्त्विज्ये निषीद, ऋत्विक्-कर्मकरणायावस्थितो भव। निषण्णश्च त्वं, ऋतुथा=काले काले, यजस्व देवप्रसादाय-लोकाभ्युदयाय च यज्ञादिकं कुरु। अतः देवान् स्तुत्या हविषा च सपर्य=परिचर-देवानां परिचर्यां सेवां कुरुष्वेत्यर्थः।

तदेतदाम्नातं स्मरति भगवान् व्यासोऽपि महाभारतस्य शल्यपर्वणि 'यत्रार्ष्टिसेनः कौरव्यो ब्राह्मण्यं संशितव्रतः। तपसा महता राजन्! प्राप्तवान् ऋषिसत्तम!॥ सिन्धुद्वीपश्च राजर्षि र्देवापिश्च महातपा। ब्राह्मण्यं लब्धवान यत्र विश्वामित्रस्तथा भुवि। महातपस्वी भगवानुग्रतेजा महातपाः॥' (म० भा० श० प० ३९। ३४-३५-३६) इति।

## विश्वामित्रादिवृत्तान्तः

एवं विश्वामित्रस्यातिप्रशस्तगायत्रीमन्त्रद्रष्टुर्राजर्षेः— 'गाधेरभून्महातेजाः समृद्ध इव पावकः। तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्॥' ( भा० ९-१७-२० ) 'ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः। क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः॥' ( म० भा० श० प० ४-४८ ) इति च।

तथा—'एकाशीतिसंख्याकानां राजर्षि-ऋषभदेवपुत्राणां-'यवीयांस एकाशीति र्जायन्तेयाः पितुरादेशकराः महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः ॥' (भा० ५-४-१३) 'कर्मतन्त्रप्रणेतारः, एकाशीतिद्विजातयः ।' (भा० ११-२-१६) इत्यादिवचनैः गुणकर्मादिभिरेव प्राप्तं मुख्यं ब्राह्मण्यं स्पष्टमावेद्यते । अयमर्थः-यवीयांसः=कनिष्ठाः, जायन्तेयाः=जयन्तीसंज्ञकमातुः पुत्राः । पितुः=भगवदवतारभूतस्य-ऋषभदेवस्यादेशं-'भवन्तो भवन्तु ब्राह्मणधर्मपालकाः' इत्यादिलक्षणं कुर्वन्ति-पालयन्तीति पितुरादेशकराः । अत एव ते महाशालीनाः महाश्रोत्रियाः यज्ञशीलाः अभूवन् । महान्तः=विस्तृताः-विद्याशाला-चिकित्साशाला-अतिथिशाला-यज्ञशाला-गौशालादयो विद्यन्ते येषां ते महाशालीना-याज्ञवल्क्यादिवत्-सहस्राधिकछात्रादिपालकाः कुलपयो गुरुकुलाधिष्ठातारो बभूवुः । अत एव ते महाश्रोत्रियाः=वेदादिसकलशास्त्रपारंगताः महाविद्वांसोऽभूवन् एवं यज्ञशीलाः=यजनयाजनाध्ययनाध्यापनादिब्रह्मकर्मनिष्ठाः संजाताः । सति चैवं ते कर्मविशुद्धाः=ब्रह्मगुणकर्मभिरेव विशुद्धाः-अर्थात क्षात्रधर्महिंसाद्यशुद्धिरहिताः सन्तो ब्राह्मणा बभूवुः । अत एव ते कर्मतन्त्रप्रणेतारः=यज्ञादिकर्मप्रतिपादकतन्त्रसंज्ञकग्रन्थानां प्रणेतारः=निर्मातारः-कर्ममार्गप्रवर्तकाः संजाताः ।

एतेन-विश्वामित्रादीनां स्वयंप्रतिभातवेदमन्त्रत्वाख्यामेव गौणं ब्राह्मण्यं प्राप्तं न तु ब्राह्मणवर्णत्वमिति भाट्टकौस्तुभे खण्डदेवाचार्य्यादिभि र्यदुक्तं तत्प्रत्युक्तम् । 'तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः । तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च ॥' (म० भा० श० प० ३६-४६) इत्यादिवचनविरोधात् । यतो

ब्राह्मणवर्णत्वाभावे ब्राह्मणवंशकारकत्वविवर्धकत्वगोत्रप्रवर्तकत्वादिकं श्रूयमाणं कथमुपपन्नं भवेत्?। अतोऽवगम्यते-ब्राह्मणवर्णत्वमपि तैरस्मिन्नेव जन्मनि प्राप्तमिति।

## गीतासम्मतिः

अत एव गीतास्वपि जगद्गुरुणा भगवताऽऽवेदितं-'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।' (४-१३) इति। चत्वारो ब्राह्मणक्षत्रियवैश्यशूद्राः इत्येते वर्णाः चातुर्वर्ण्यम्। स्वार्थे ष्यञ् प्रत्ययः। एतच्च मया भगवता गुणकर्मविभागमनुसृत्यैव सृष्टं-व्यवस्थापितं, न त्वेकान्ततो जन्मना जात्या वा। यदि हि वर्णव्यवस्थायाः गुणकर्मावलम्बित्वं नाभिप्रेतमभविष्यत्, तदा भगवता 'गुणकर्मविभागशः' इति नैवाभ्यधास्यत्, किन्तु 'जन्मजातिविभागशः' इति प्रत्यपादयिष्यत्।

ननु–सृष्टमित्यत्र भूतकालत्वनिर्देशात् अतीते जन्मान्तरे विद्यमानगुणकर्मविभागशः चातुर्वर्ण्यं सृष्टं, न तु वर्तमानगुणकर्मविभागशः इति चेत् बाढम्। तत्रापि जन्मान्तरविद्यमानानां तत्तद्गुणकर्मादीनां वर्तमानाया अभिव्यक्तेरेव तत्तद्वर्णविभागप्रयोजकत्वं सम्पद्यते। अन्यथा जन्मान्तरे विद्यमानानां तेषामस्तित्वमेव कथं ज्ञातं भवेत्?। विरोधाभावात् वाक्यभेदापाताच्च-'न तु वर्तमानगुणकर्मविभागशः' इति निषेद्धुं न शक्यते। अपि च बहुत्रानुभूतव्यभिचारत्वात् तत्तद्वर्णजातानामपि भूयसां तत्तद्गुणकर्मानुपलब्धेः, अन्यत्रापि तदुपलब्धेश्च न चेदं नियन्तुं शक्यते-यज्जन्मान्तरविद्यमानगुणकर्मविभागश एव चातुर्वर्ण्यविभागः। परमेश्वरस्य भूतवर्तमानादिसर्वविश्वकारणतयाऽतीतजन्मवर्तमानदेहाभिव्यक्तगुणकर्माण्यपेक्ष्य सृष्टत्वोपपत्तेश्च। अत एवोत्तरत्राष्टादशाध्यायेऽपि–'ब्राह्मणक्षत्रियविशां

शूद्राणाञ्च परन्तप !। कर्माणि प्रविभक्तानि स्वभावप्रभवै-र्गुणैः ॥' (गी० १८-४१) इत्यनेन तत्तद्वर्णविभागस्य प्रयोजकाः स्वभावप्रभवा गुणा एवोक्ता, न तु जन्म जातिर्वा प्रोक्तेति।

## नीलकण्ठाचार्य्यव्याख्यानम्

तदेतद् व्याख्यातमशेषमहाभारतसंस्कृतव्याख्यात्रा नील-कण्ठाचार्य्येणाद्वैतवादिना--स्वभावः=प्राग्भवीयः संस्कारः, तत्प्रभवैर्न तु जातिमात्रप्रभवैः पक्षिणामाकाशगमनवत्, अत एव जात्यन्तरव्यावृत्तानां धर्माणां शमादिषु पाठो न दृश्यते, न हि शूद्राद्व्यावृत्तं त्रैवर्णिकानामध्ययनादिकं वा, इतरद्वयाद्व्यावृत्तं ब्राह्मणानामध्यापनादिकं वेह पठ्यते। किन्तु सर्वे सर्वजाती-यानां साधारणाः धर्माः शमादयो दृश्यन्ते। यथाहि द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकं, भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टम्। एवमितरत्र। तस्माद्यस्मिन् कस्मिश्चित् वर्णे शमादयो दृश्यन्ते, स शूद्रोऽप्येतैर्लिङ्गैर्ब्राह्मण एव ज्ञातव्यः। यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यन्ते, स शूद्र एव। तथा चारण्यके सर्पभूतं नहुषं प्रति युधिष्ठिरवाक्यं-'सत्यं दानं क्षमा शीलमानृ-शंस्यं तपो घृणा। दृश्यन्ते यत्र नागेन्द्र ! स ब्राह्मण इति स्मृतः ॥' तथा 'यत्रैतल्लक्ष्यते सर्प ! वृत्तं स ब्राह्मणः स्मृतः। यत्रैतन्न भवेत्सर्प ! तं शूद्रमिति निर्दिशेत् ॥' ( म० भा० वनपर्व १००-१-२ ) इति।

## शौनकादिमहर्षिविहितचातुर्वर्ण्यविभागः

एवं विष्णुपुराणमहाभारतादौ-'तत्तद्गुणकर्मानुसारेणैव शौनकादिमहर्षिभिर्वर्णव्यवस्था प्रवर्तिता इति तत्रत्यैर्वचनैः स्पष्टमवगम्यते। तथाहि--'गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्तयि-

ताऽभूत् ।' ( वि० पु० अंश ४-८-१ ) 'भार्गस्य भार्गभूमिः, अतश्चातुर्वर्ण्यप्रवृत्तिः ।' ( वि० पु० अंश० ४-८-६ ) इति । 'पुत्रो गृत्समदस्यापि शुनको यस्य शौनकाः । ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ॥' (हरिवंशपुराणे—२६-१५-२०) इति । अत्र शुनकस्य महर्षेः प्रजारूपाः, तस्मादेव संभूताः--तत्तदगुणकर्मादिभिर्व्यवस्थापिताः ब्राह्मणादयश्चत्वारो वर्णाः शौनकाः--शुनकेन विरचिता इत्यन्वर्थनाम्नाऽभिधीयते । 'ब्रह्मणो मानसाः पुत्राः विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ मरीचेः कश्यपः पुत्रः कश्यपात्तु इमा प्रजाः ॥' (म० भा० आ० ६५-१०-११) इत्यत्र कश्यपान्महर्षेः संभूताः--तत्तदगुणादिभिर्व्यवस्थापिताः इमाः सर्वाः प्रजाः ब्राह्मणाद्याः काश्यपाः इत्यावेद्यते । अत एव विद्यते खलु भारते वर्षे परिपाटीरियं—यस्य कस्यचित् स्वगोत्रं विस्मृतं चेत्, अविदितञ्च चेत्, तदा सामान्यतया सर्वेषां ब्राह्मणादीनां कृते वर्तमानं कश्यपगोत्रं स्वस्मिन् मन्तव्यम्, कश्यपगोत्रीयोऽहमित्यभिधातव्यञ्चेति । एवं महाभारतस्य शान्तिपर्वणि विश्वकारणात् महादेवात् प्राक् ब्राह्मणा एव सृष्टाः, नान्ये क्षत्रियादयः सृष्टाः पश्चात् राष्ट्ररक्षणपोषणादिप्रयोजनायैव तेभ्य एव ब्राह्मणेभ्यः 'तन्तुभ्यः पटा इव' 'सुवर्णपिण्डात् आभरणानीव च' क्षत्रियाद्याः वर्णाः सृष्टाः, इत्याहुः—'वाक्संयमकाले हि तस्य वरप्रदस्य देवदेवस्य (सकाशात्) ब्राह्मणाः प्रथमं प्रादुर्भूताः । ब्राह्मणेभ्यश्च शेषाः वर्णाः प्रादुर्भूताः ॥' (म० भा० शा०प० ३४२-२१) इति संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।' (म०भा०शां०६०-४२) सृष्टयः=संतानानि, तेन सर्वेषां वर्णानां ब्राह्मणजत्वाद् अस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः (नीलकण्ठव्याख्यानम्) 'तस्मा-

द्वर्णा ऋजवो ज्ञातिवर्णाः संसृज्यन्ते तस्य विकार एव । एकं साम यजुरेकमृगेका विप्रश्चैको निश्चये तेषु सृष्ट ॥' (म० भा० शा० प० ६०-४७) इति । तस्माद्–ब्राह्मणात् रक्षणाद्यर्थं क्षत्रियादयो वर्णाः संसृज्यन्ते=विरच्यन्ते । अत एव तस्य ब्राह्मणस्य ते क्षत्रियाद्याः ज्ञातिवर्णा सन्ति, एतेन धर्मसाम्येऽपि ज्ञातिसाम्यं ब्राह्मणक्षत्रियादिषु नास्तीति शंका परास्ता । पुनः कीदृशास्ते ऋजवः=समस्वभाववन्तः-तत्सारल्यविनयाद्युपेताः-साधवः सन्ति । अत एव तस्य प्रकृतिभूतस्य ब्राह्मणस्य क्षत्रियादिः कार्यरूपविकार एवास्ति । यथा मृत्तिकारूपप्रकृतेर्घटादिर्विकारः तत्स्वरूपभूतः । तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम् । तत्र हेतुमाह–एक इति । तेषु तत्त्वनिश्चये क्रियमाणे एको विप्रः=ब्रह्मैव, प्रथमो ब्राह्मणः सृष्टः=जातः, ब्राह्मणसन्ततित्वात् सर्वेऽप्येते क्षत्रिय-वैश्य-शूद्रा इति तत्तत्कर्मयोगात्संज्ञिता अपि मनुष्या ब्रह्मसन्तानत्वात् मूलजातितः ब्राह्मणा एवेत्यर्थः । तत्र दृष्टान्तः–यथा एकस्मादोङ्कारात् सृष्टाः सामादयो वेदा एकीभूताः तत्समानगौरवशालिनः सन्ति । तथा प्रकृतेऽपि तेषु क्षत्रियादिषु विप्रः=ब्राह्मण एव सृष्टः, स एव क्षत्रियादिरूपेण परिणतोऽभूदित्यर्थ । अत एव 'आभरणादिकार्येषु कारणरूपेण स्वर्ण इव' तेषु कार्यभूतेषु क्षत्रियादिषु कारणतया ब्राह्मण एव विभाति । यद्वा एकं सामेति–'अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यंज्यमाना बह्वी नानारूपा भवति इति श्रुतेः' एकमकाररूपमेवाक्षरं यथा सामादिरूपं, तथा ब्रह्मैव ब्राह्मणादिचातुर्वर्ण्यरूपमित्यर्थः । (नीलकण्ठः) 'ससर्ज ब्राह्मणानग्रे सृष्टयादौ सः चतुर्मुखः । सर्वे वर्णाः पृथक् पश्चात् तेषां वर्णेषु जज्ञिरे ॥' ( पद्म-पु० उत्कल-

खण्डे—३८-४४ ) इति । तेषां=ब्राह्मणानां रक्तादिवर्णेषु पृथक्तया जज्ञिरे=प्रादुर्भूताः स्म इत्यर्थः । अत एव शतपथब्राह्मणेन ब्राह्मणसंभूतयोः क्षत्रियवैश्ययोः ब्राह्मणत्वव्यवहार इत्थमनुमोदितः—'तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येवं ब्रूयात्, ब्रह्मणो हि जायते, यो यज्ञाज्जायते ।' ( शत० ब्रा० का० ३ प्रपा० १ क० ४० ) एवमापस्तम्बोऽपि 'क्षत्रियवैश्ययोरपि ब्राह्मणशब्देनैवाऽऽवेदनं दर्शयति—'ब्राह्मणो वा एष जायते, यो दीक्षते' इति । 'तेन सर्वेण संस्कारेण क्षत्रियो ब्राह्मण्यं प्राप्नोति ।' 'तस्माद्राजन्यवैश्या अपि ब्राह्मण इत्येवावेदयति' इत्यादिसायणीयं भाष्यं द्रष्टव्यम् ।

## पाण्डवचरितम्

सति चैवं वनवासकाले द्रौपदीस्वयंवरसमये च क्षत्रियप्रवराणां सत्यवादिनां धर्मनिष्ठानां युधिष्ठिरादिपाण्डवानां ब्राह्मणत्वकथनं ब्राह्मणधर्मभिक्षाटनादिकञ्च वर्ण्यमानं महाभारतादौ संगच्छते न च तदा तेषां 'वयं ब्राह्मणाः स्मः' इति कथनेन तद्वेषमृगाजिनादिधारणेन चानृतवादित्वं कपटाचरणशीलत्वञ्च संपद्यमानं बभूव ।

यथाहि—वनवाससमये द्रौपदीस्वयंवरस्थाने सर्वे युधिष्ठिरादयः पाण्डवाः ब्राह्मणवेषकृष्णाजिनादिधारकाः 'वयं ब्राह्मणाः स्मः' इति ब्रुवाणाः ब्राह्मणसभायामवस्थिताः ब्राह्मणत्वेन व्यवह्रियमाणाश्चासन् ।

अत एवार्जुनो यदा मत्स्यवेधं विधातुं—'अथोदतिष्ठद् विप्राणां मध्याज्जिष्णुरुदारधीः' । ( म० भा० आदिपर्वणि १८८-१ ) । तदा कैश्चित् ब्राह्मणैरिदमुक्तमर्जुनं प्रति—भो ब्राह्मणबटो ! यदि त्वं मत्स्यवेधे विफलो भविष्यसि, तदा—

'अवहास्या भविष्यन्ति, ब्राह्मणाः सर्वराजसु ।' ( आदिपर्वणि १८८-९ ) इति । तद्वचनं श्रुत्वाऽर्जुनस्य बटोः प्रशस्ताकृतिं दृष्ट्वाऽन्ये ब्राह्मणा एवमूचुः— 'न च तद्विद्यते किञ्चित् कर्म लोकेषु यद्भवेत् । ब्राह्मणानामसाध्यञ्च ।'. ( आ० प० १८८-११ ) 'दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा ।' (१३) 'जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि । पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा ।। तस्माद् ब्रुवन्तु सर्वेऽत्र बटुरेष धनुर्महान् । आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः ।।' ( १४-१५ ) इति । एवमर्जुनपराक्रमेण मत्स्यवेधे सम्पन्ने सति—'विस्मिताः राजसत्तमाः । वृत्तो ब्राह्मोत्तरो रङ्गः, पाञ्चाली ब्राह्मणैर्वृता ।' ( म० भा० आ० प० १९०।३९-४० ) इति । लोकाः कथयामासुः । ब्रह्म=ब्राह्मणजातिः, उत्तरं=उत्कृष्टं यस्मिन् स ब्राह्मोत्तरः । रङ्गः=संग्रामस्थलः, वृत्तः=विजितः इत्यर्थः ।

तदाऽर्जुनस्य द्रौपदीविजेतुर्ब्राह्मणस्येमं विजयं दृष्ट्वा विस्मितः कर्णः, तं प्रति उवाच—'तुष्यामि ते विप्रमुख्य ! भुजवीर्यस्य संयुगे । किं त्वं साक्षाद् धनुर्वेदो रामो वा विप्रसत्तम ! ।।' इति ( अ० १९०।१६ ) । 'तमेवं वादिनं तत्र फाल्गुनः प्रत्यभाषत । नास्मि कर्ण ! धनुर्वेदो नास्मि रामः प्रतापवान् ।। ब्राह्मणोऽस्मि युधां श्रेष्ठः, सर्वशस्त्रभृतां वरः ।। ब्राह्मे पौरन्दरे चास्त्रे निष्ठितो गुरुशासनात् । स्थितोऽस्म्यद्य रणे जेतुं त्वां वै वीर ! स्थिरो भव ।। वैशंपायन उवाच—'एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यवर्तत । ब्राह्मं तेजस्तदाऽजय्यं मन्यमानो महारथः ।।' (म० भा० आदि पर्वणि-स्वयंवरपर्वणि १९०।२०-२१-२२) इति । फाल्गुनः =

अर्जुनः । राधेयः=राधापुत्रः कर्णः । युधां=योद्धृणां । सुपरिचितो वेषान्तरेण समक्षमवस्थितः संभाषणं कुर्वाणोऽप्यर्जुनः आकृत्या स्वरेण च कर्णेन तत्त्वेन न ज्ञातोऽभूदित्याश्चर्यम् । यद्वा 'लाक्षागृहे सर्वे पाण्डवाः मृताः' इति दृढतरनिश्चयेन हेतुनाऽर्जुनपरिचयसंपादने सामर्थ्यं नाभूत्तस्येति मन्ये ।

एवमरण्ये यत्र तत्र विचरन्तः पाण्डवाः ब्राह्मणधर्मस्य वेदाध्ययनभैक्षाचरणादेः पालनं कुर्वन्तो ब्राह्मणभावेनैव सर्वत्र प्रसिद्धाः अभूवन् इत्येतैर्महाभारतस्य वचनैरप्यवगम्यते—'जटाः कृत्वाऽऽत्मनः सर्वे, वल्कलाजिनवाससः । सह कुन्त्या महात्मानो बिभ्रतस्तापसं वपुः ॥ ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः ।' (म० भा० आ० प० हिडम्बवधपर्वणि १५६।३-४) इति । 'चेरुर्भैक्षं तदा ते तु सर्व एव विशां पते ! । (म०भा० आ० प० बकवधपर्वणि १५७।४ इति च । यदा हि एकचक्रा नगर्यां गताः, तत्र स्थितस्य कस्यचित् ब्राह्मणस्य गृहे ब्राह्मणवेषेण स्थिताः पाण्डवा आसन्, तदा स्वगृहनिवासदातारं राक्षसविहितप्रभूतसंकटसमाक्रान्तं ब्राह्मणं प्रति दयाशीलया कुन्त्या देव्येदं कथितम्—मम बलवान् पुत्रो बकराक्षसवधाय त्वदर्थं गमिष्यतीति । तदा धर्मभीरुणा ब्राह्मणेनेदमुक्तम्—ब्राह्मणस्यातिथेस्त्वत्पुत्रस्य मम स्वार्थाय राक्षसात्संपादितो विनाशः सर्वथाऽनुचितोऽस्ति, नाहमेतत्करिष्यामीति । ब्राह्मण उवाच—'नाहमेतत्करिष्यामि, जीवितार्थी कथञ्चन । ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणान् वियोजयन् ॥ ब्रह्मवध्याऽऽत्मवध्या वा, श्रेयानात्मवधो मम । ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते ॥' ( म० भा० आ० प० बकवधपर्वणि १६१।४-६ ) 'श्रेयांस्तु सह दारस्य विनाशोऽद्य मम स्वयम् । ब्राह्मणस्य वधं

नाहमनुसंस्थे कदाचन ॥' ( आ० प० १६१-१२ ) इति ।

तथा चेदमेतैर्वचनैरवगम्यते, यत् तदानीं स्वेच्छावशात् स्वस्वरुच्यनुसारेणार्यजनो यं यं ब्राह्मणादिवर्णं प्राप्तुं यद्यद्वर्णधर्मांश्च पालयितुमभिललाष, तं तं वर्णं प्राप्तुं शशाक, तत्तद्धर्मांश्चाभ्युपगन्तुं प्रबभूव । अद्यतनदृष्टकठिनवर्णबन्धनवत् तदा तादृशं कठिनं वर्णबन्धनं नाभूत्, किन्तु तत्तद्गुणकर्मवेषादिपरिवर्तनतस्सहजतस्तत्तद्वर्णपरिवर्तनं कर्तुमार्याः प्राभवन् । तदानीं ब्राह्मणभावेन वर्तमानानां धर्मनिष्ठानां पाण्डवानां कृते न कश्चन शास्त्रप्रतिषेधो दृष्टः, न च लोकगर्हालक्षणः प्रतिषेधः संजातः किन्तु समुदारशीलाभ्यां शास्त्रलोकाभ्यामनुमोदितमासीदिति तद्भारतेतिहासेन ज्ञायते । 'अप्रतिषिद्धं तदनुमोद्यते' इति न्यायात् ।

एतेन—'चातुर्वर्ण्यं मया सृष्टं' ( गी० ४-१३ ) इति गीतावचनस्य 'सर्वं वाक्यं सावधारणमि' ति न्यायमाश्रित्य मयैव चातुर्वर्ण्यं सृष्ट्यादौ सृष्टं, नैव पुनरन्येन केनाप्युपायेन स्रष्टुं शक्यते, इति केनचिद्विहितं व्याख्यानं परास्तम् । पूर्वोक्तवचनेषु शौनकादिमहर्षिभिर्गुणकर्मावलम्बनेन चातुर्वर्ण्यस्य सृष्टत्वप्रतिपादनात् । एवं भगवान् मनुरपि ब्राह्मणादीन् मानवान् असृजदिति वाल्मीकिरामायणे महाभारते चेत्थं वर्णितं—'मनुर्मनुष्याञ्जनयद् राम ! पुत्रान्यशस्विनः । ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्च मनुजर्षभ ! ॥' ( वा० रा० अरण्यकाण्ड० १४-२९) 'मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् । ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ॥' ( म० भा० आदिपर्व० ७५-१३ ) इति ।

## भृगुभारद्वाज-संवादः

तथा महाभारतस्य शान्तिपर्वणि भृगुरुवाच-'ब्राह्मणानां सितो ( शुक्लः )वर्णः, क्षत्रियाणान्तु लोहितः ( रक्तः ) । वैश्यानां पीतको वर्णः शूद्राणामसितः (कृष्णः) तथा ॥' (म० भा० शां० प० १८८ । ५) इत्येवं भृगुणोक्ते सति भारद्वाज उवाच-'चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते । सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥' अर्थात् चतुर्णां ब्राह्मणादीनां शुक्लादिवर्णेन प्रयोजकेन वर्णविभागो मन्येत चेत्, तदा सर्वेषां ब्राह्मणादीनां मध्ये वर्णानां सांकर्यमेव दृश्यते । न हि सर्वे ब्राह्मणाः शुक्ला एव सन्ति, कुत्रचित् रक्ताः पीताः कृष्णा अपि दृश्यन्ते । एवं क्षत्रिया अपि, वैश्या अपि, शूद्रा अपि विभिन्नशुक्लादिवर्णेन प्रतीयन्ते, अतः शुक्लादिवर्णदर्शनेन वर्णविभागनिश्चयो न कर्तुं शक्यत इत्यर्थः । 'कामः क्रोधो भयं लोभः, शोकश्चिन्ता क्षुधा श्रमः । सर्वेषाञ्च प्रभवति, कस्माद्वर्णो विभिद्यते?॥' अर्थात् कामादीनां दोषाणामपि सर्वेषु ब्राह्मणादिषु सामान्यतया वर्तमानत्वात् कामादिदोषा अपि ब्राह्मणादिवर्णविभागप्रयोजका न भवन्तीति भावः । 'स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् । तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते?। अर्थात् निखिलेषु शरीरेषु सामान्यतया वर्तमानानि स्वेदादीन्यपि-समानस्वरूपाणि सन्ति, ब्राह्मणादिवर्णविभागप्रयोजकानि न भवन्तीति भावः । इत्येवंभूताः शंकाः समाधातुं पुनर्भृगुरुवाच-'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥' अर्थात् तत्तद्गुणान् तत्तत्कर्माणि च विहाय ब्राह्मणादिवर्णानां व्यावर्तकं विशेषः=वैलक्षण्यमवलोक्यमानं नास्ति किमपि । वस्तुतः इदं सर्वं मनु-

जादि जगत्, ब्रह्मणा सृष्टत्वात् उपलक्षणमिदं-ब्रह्मण्यवस्थानात् तत्रैव च विलीयमानत्वाच्च ब्रह्मभूतमेवास्ति 'सर्वं खल्विदं ब्रह्म' (छां० उ० ३।१४।१) इति श्रुतेः। अतो नेदं ब्रह्मणो मनागपि विभिन्नमस्ति। तथापीदं मनुजादि जगत् तैः तैः कर्मभिः, उपलक्षणतया तत्तद्गुणैरेव च विभिन्नवर्णतां गतं=प्राप्तम्। अर्थात् गुणकर्मादिरेव वर्णभेदव्यवहारप्रयोक्ता बभूव। अतोऽद्यतनानां सर्वेषां ब्राह्मणादीनां मिथुनसंप्रयोगेण मातृयोनिमार्गेणैव च समुत्पत्तिदर्शनात् मुखादिरूपेण ब्राह्मणादीनां कथनं विद्याबलधनश्रमादिगुणकर्मनिबन्धनस्तुतिप्रदर्शनायैव विज्ञेयम्।

अत एव द्विजाः—ब्राह्मणाः एव ज्ञानविज्ञानशमदमदयादानादीनि स्वगुणकर्माणि परित्यज्य—'कामभोगप्रियाः तीक्ष्णाः, क्रोधनाः प्रियसाहसाः। शूरा वीराश्च रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः। वाणिज्याद्यनुतिष्ठन्ति ते द्विजाः वैश्यतां गताः ॥ हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः। कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥' इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ॥ ( म० भा० शा० प० १८८।६-७-८-९-१०-११ ) इति। अतोऽत्रेदं स्पष्टमवगम्यते—यत् उत्तमगुणकर्मभिरुत्तमवर्णत्वमिव, अधमगुणकर्मभिरधमवर्णताऽपि प्राप्यते इति। तस्मात्तत्तद्गुणकर्मावलम्बिन्येव ब्राह्मणादिवर्णव्यवस्था इति सिद्धम्।

## उमा—महेश्वरसंवादः

अत्र महाभारतस्यानुशासनपर्वण्यवस्थित उमामहेश्वरसंवादोऽपि द्रष्टव्यः। तथाहि—'ज्ञानविज्ञानसम्पन्नः संस्कृतो वेदपारगः। विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा ॥' अर्थात् क्षत्रियोऽपि ब्राह्मणोक्तगुणकर्मभिर्विप्रो भवतीति स्पष्ट-

मत्रावेदितम् । 'एतैः कर्मगुणैर्देवि ! न्यूनजातिकुलोद्भवः । शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ।।' अर्थात्--शूद्रोऽपि तत्तद्गुणकर्मभिर्द्विजो-ब्राह्मणो भवतीत्यनेन विज्ञायते । 'ब्राह्मणो वाऽप्यसद्वृत्तः सर्वसंकरभोजनः । ब्राह्मण्यं सः समुत्सृज्य शूद्रो भवति तादृशः ।।' अर्थात् दुराचारी ब्राह्मणोऽपि दुष्टगुणकर्मभिः स्वकीयं ब्राह्मणत्वं विहाय शूद्रो भवत्येव तुल्यन्यायेन । अनेनोत्तमविचाराचारैः अधमोऽप्युत्तमत्वमिवोत्तमोऽपि निकृष्टविचाराचारैः अधमो भवत्येवेति स्पष्टमावेद्यते । 'कर्मभिः शुचिभिर्देवि ! शुद्धात्मा विजितेन्द्रियः । शूद्रोऽपि द्विजवत्सेव्यः, इति ब्रह्माऽब्रवीत् स्वयम् ।। स्वभावः कर्म च शुभं, यत्र शूद्रेऽपि तिष्ठति । विशिष्टः स द्विजातेर्वै विज्ञेय इति मे मतिः ।। न योनिर्नाऽपि संस्कारो न श्रुतं न च संततिः । कारणानि द्विजत्वस्य वृत्तमेव हि कारणम् ।। सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते । वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ।। ब्राह्मः स्वभावः सुश्रोणि ! समः सर्वत्र मे मतिः । निर्गुणं निर्मलं ब्रह्म, यत्र तिष्ठति स द्विजः ।।' (म० भा० अनु० १४३।४५-४६-४७-४८-४९-५०-५१-५२) इति । उक्त्वा चान्तेऽपि गुणकर्मनिबन्धनामेव तत्तद्वर्णप्राप्तिं दर्शयन्नुपसंहरति—'एतत्ते गुह्यमाख्यातं, यथा शूद्रो भवेत् द्विजः । ब्राह्मणो वा च्युतो धर्माद्यथा शूद्रत्वमाप्नुते ।।' (म० भा० अनु० १४३।४९) इति ।

## वज्रसूच्युपनिषत्

इतोऽपि तत्तद्गुणकर्मावलम्बिन्येव वर्णव्यवस्था । एवं वज्रसूच्युपनिषदि समाम्नायते—'ब्रह्म-क्षत्रिय-वैश्य-शूद्राः' इति चत्वारो वर्णाः । तेषां वर्णानां ब्राह्मण एव प्रधानः इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम् । तत्र चोद्यमस्ति ? को वा ब्राह्मणो

नाम ? किं जीवः ? किं देहः ? किं जातिः ? किं ज्ञानम् ? किं कर्म ? किं धार्मिकः ? इति । तत्र प्रथमो जीवो ब्राह्मण इति चेत्, तन्न, अतीतानागतानेकदेहानां जीवस्यैकरूपत्वात्, एकस्यापि कर्मवशादनेकदेहसंभवात्, सर्वशरीराणां जीवस्यैकरूपत्वाच्च । तस्मान्न जीवो ब्राह्मण इति । तर्हि देहो ब्राह्मण इति चेत्तन्न, आचाण्डालादिपर्यन्तानां मनुष्याणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वात्, जरामरणधर्माधर्मादिसाम्यदर्शनाद् ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात् । पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादिदोषसंभवाच्च । तस्मान्न देहो ब्राह्मण इति । तर्हि जातिर्ब्राह्मणः इति चेत्तन्न । तत्र जात्यन्तरजन्तुष्वनेकजातिसंभवा महर्षयो बहवः सन्ति । ऋष्यश्रृङ्गो मृग्याः (१)कौशिकः कुशात् (२)जाम्बूको जम्बूकात् (३)वाल्मीको वल्मीकात् (४)व्यासः कैवर्तकन्यायां (५)शशपृष्ठात् गौतमः(६)वसिष्ठः‡

‡इदं ऋग्वेदेऽपि श्रूयते—'उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् ! मनसोऽधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन, विश्वेदेवाः पुष्करे त्वाददन्तः ॥' (ऋ० ७।३४।११) इति । उत=अपि च, हे वसिष्ठ ! त्वं मैत्रावरुणः=मित्रावरुणयोर्द्वयोः पुत्रः, असि=भवसि । हे ब्रह्मन् ! त्वं उर्वश्याः अप्सरसः मनसः=ममायं पुत्रः स्यादितीदृशात् संकल्पात्, द्रप्सं=रेतो वीर्यं, मित्रावरुणयोरुर्वशीदर्शनात्, स्कन्नं=स्खलितमासीत् । तस्मादधिजातोऽसीत्यर्थः । एवं जातं त्वा=त्वां दैव्येन=देवसम्बन्धिना, ब्रह्मणा=वेदराशिना युक्तं पुष्करे=क्षेत्रविशेषे विश्वेदेवाः, अददन्त=अधारयन्त । तदेतद् बृहद्देवतायां स्मर्यते—'तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम् । रेतश्चस्कन्द तत्कुम्भे न्यपतद् वासवीवरे ॥ तेनैव

उर्वश्याम् (७)अगस्त्यः कलशे जात इति श्रुतत्वात् । एतेषां जात्या विनाऽप्यग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति । तस्मान्न जातिर्ब्राह्मण इति । तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न । क्षत्रियादयोऽपि परमार्थदर्शिनोऽभिज्ञा बहवः सन्ति । तस्मान्न ज्ञानं ब्राह्मण इति । तर्हि कर्म ब्राह्मण इति चेत्तन्न । सर्वेषां प्राणिनां प्रारब्धसंचितागामिकर्मसाधर्म्यदर्शनात्कर्माभिप्रेरिताः सन्तो जनाः क्रियाः कुर्वन्तीति, तस्मान्न कर्म ब्राह्मण इति । तर्हि धार्मिको ब्राह्मण इति चेत्तन्न, क्षत्रियादयो हिरण्यदातारो बहवः सन्ति, तस्मान्न धार्मिको ब्राह्मण इति । तर्हि को वा

---

तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ । अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतु ।। बहुधा पतितं रेतः कलशे च जले स्थले । स्थले वसिष्ठस्तु मुनिः संभूत ऋषिसत्तमः ।। कुम्भे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः । उदियाय ततोऽगस्त्यः शम्यामात्रो महा-तपाः ।। मानेन संमितो यस्मात्तस्मान्मान्य इहोच्यते । यद्वा कुम्भादृषिजातः कुम्भेनापि हि मीयते ।। (बृ० दे० ५ । १४६-१५४) इति । 'कुम्भे रेतः सिषिचतुः समानम् । ततो ह मान-मुदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम् ।।' (ऋ० ७।३४। १३) कुम्भे=वासवीवरे कलशे, समानं=एकदैव, रेतः सिषिचतुः मित्रावरुणौ असिञ्चताम्, ततः=कुम्भात् मध्यात् अगस्त्यः, मानः=शमीप्रमाणः, उदियाय=प्रादुर्बभूव । तत एव कुंभात् वसिष्ठं अपि ऋषिं जातमाहुः । वसिष्ठादेरीदृशी उत्पत्तिर्वाल्मी-कीयरामायणे—'उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम् ।' (५६।२१) इत्यादौ । एवं श्रीमद्भागवतेऽपि—'मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ।' (भा० ६।१३।६) इत्यादौ स्पष्टं निरू-प्यते । प्रपितामहः=वसिष्ठः, जज्ञे=प्रादुर्भूतः इत्यर्थः ।

ब्राह्मणो नाम । यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं·· करतलामलकवत्साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो ··· दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तते, एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः । अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव ।' ( व० सू० उ० ) ।

## अस्या इदं निश्चितं तात्पर्यम्

अनया हि जात्यादिखण्डनं पुरस्कृत्य ब्राह्मण्यप्रयोजकमशेषगुणमूर्धन्यमपरोक्षब्रह्मात्मज्ञानमेवेति प्रदर्शयन्त्या वर्णव्यवस्थायाः गुणकर्मावलम्बनत्वमेव सूच्यते । एतेनात्र ब्राह्मणप्राधान्यप्रयोजकमेव ब्रह्मज्ञानं प्रतिपाद्यते, न तु ब्राह्मणवर्णत्वप्रयोजकमिति केनचिदुक्तं निरस्तम् । यतोऽत्र वर्णत्वस्य खण्डितत्वात् तत्प्राधान्यस्यात्रानिरूपणाच्च 'कथं ब्राह्मणः प्रधानः स्यादि ? ति । अस्तु वा तत्प्राधान्यप्रयोजकं ब्रह्मज्ञानं, यदाहुः शिष्टाः विद्वद्वरा अपि—'ब्राह्मणानाञ्च ब्राह्मण्यं ब्रह्मचर्यादभिव्यज्यते । संप्राप्य ब्रह्मनिष्ठत्वं पूर्णं ( मुख्यं ) ब्राह्मण्यमाप्यते ।।' इति । परञ्च ब्राह्मणवर्णत्वप्रयोजकन्तु ब्रह्मज्ञानसाधकशमादिगुणकर्मवैशिष्ट्यमेव, अन्यथा गुणकर्मशून्या निर्वचनानर्हा सांकेतिकी वराकी ब्राह्मणत्वादिजातिः किं करिष्यति ? । न ह्यौष्ण्यप्रकाशविहीनेन सूर्यत्वावच्छिन्नेन तमो विहन्तुं विश्वाह्लादकमालोकञ्च विस्तारयितुं शक्यते । तथाभूतस्य वा सूर्यस्यास्तित्वपरिचयोऽपि कथ स्यात् ? । एवं तत्तद्गुणकर्मरहितब्राह्मणक्षत्रियादेः 'चिकित्सादिगुणकर्मरहितस्य डाक्टरस्येव, कानूनज्ञानादिगुणकर्मरहितस्य

वेरिष्टरस्येवास्तित्वपरिचयोऽपि केन कथं वा लभ्यः स्यात् ? । अतः पृथिव्यादाविव व्यवहारविषयाया अनिर्वचनीयायास्तत्त-ज्जातेरपि परिचयस्तत्तदसाधारणगुणादिकमादायैव सिद्ध्यतीति सर्वं सुस्थम् । एतेन. 'जन्मना जायते शूद्रः, संस्काराद् द्विज उच्यते । विद्यया याति विप्रत्वं ब्रह्मवित् ब्राह्मणो भवेत् ।।' इत्यादीनि वचनानि व्याख्यातानि ।

## शंका-समाधानम्

ननु-वर्णव्यवस्थायास्तत्तद्गुणकर्मावलम्बित्वे बाल्ये गुणा-देरनभिव्यक्तत्वेन कुतो ब्राह्मण्यादिनिर्णयः, तदभावे च कुतस्तरामष्टवर्षोपवीतधारणादिसंस्कारप्रविभाग इति चेन्न, तत्तद्रोगपरीक्षणकुशलस्य राजवैद्यस्येव, मनुजस्वभावाकृतिवर्णा-दिपरीक्षणकुशलस्याचार्यस्यापक्षपातया परीक्षया बाल्येऽपि 'आकृतिर्गुणान् कथयतीति' न्यायेन विशेषतोऽनभिव्यक्ततत्त-द्गुणकर्मादिनिर्णयसम्भवेन ब्राह्मण्यादिनिर्णयसम्भवात् । तदेतदुक्तं-शिष्टाग्रसरेण वेदार्थाभिज्ञेन मनुनापि—'आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजरामरा ।।' ( मनुस्मृ० २।१४८ ) इति । माणवकस्या-कृतिवर्णोच्चारणादिपरीक्षणेन सावित्र्या=गायत्रीमन्त्रप्रदानद्वारा यां ब्राह्मणत्वादिजातिं, उत्पादयति=प्रकटयति, सैव जातिः सत्या=यथार्था विज्ञेया, सैवाजरामरा=शाश्वती चेत्यर्थः । अतः—'ब्राह्मणत्वादिरूपैव जातिरत्र विवक्षिता । सा नैव जन्मतः सिद्धा, किन्त्वाचार्येण जन्यते ।। स्वाध्यायेन व्रतैर्होमैस्त्रैवि-द्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।।' (म०स्मृ०२।२८) 'न त्वेव जन्ममात्रेण ब्राह्मी जातिर्भवेन्नृणां । न क्षात्री न च वा वैश्या नैव शौद्रीतिनिर्णयः ।। ब्राह्मणत्वादिरूपा

हि या जातिः कल्पिता नृषु। कर्मैव कारणं तस्यां न जन्मेति सती स्थिति ॥' ( भा० भा० ) इति। पितृभ्यां शरीरस्य संभूतिमात्रं क्रियते, न तु ब्राह्मण्यादिजातिः संपाद्यते, तस्यास्तु तत्तद्गुणकर्मादिभ्य एवेत्याह-भगवान् मनुः—'कामान्माता पिता चैनं, यदुत्पादयतो मिथः। संभूतिं तस्य तां विद्यात्, यद्योनावभिजायते ॥ ( म० स्मृ० २।१४७ ) इति। एनं=बालकं, कामात्-हेतोः, संभूतिं=उत्पत्तिं, इत्यर्थः।

ननु-तत्तद्गुणकर्मादिस्वभावस्यानवस्थितत्वेन ब्राह्मण्यादेः परिवर्त्तनापातात्, इति चेदिष्टापत्तेः। एवं तर्हि कथं व्यवस्थापनम् ? यथा दृष्टं, तथैव परीक्षणेन तद्व्यवस्थापनसंभवात्। यदाह—'स्तेनोऽपि वाल्मीकिरभून्महर्षिः, विप्रोऽपि दैत्यो दशकन्धरोऽभूत्।' इति। ननु-तर्हि विवाहादिसम्बन्धस्य का गतिः? प्रयत्नतः समुद्रिक्ततत्तद्गुणकर्मस्वभाववर्णाकृत्यादिपरीक्षणेन तस्य यथावदवस्थितिरेव गतिरिति गृहाण। अतएव लोकनेत्रा श्रीराजगोपालाचार्य्येण दाक्षिणात्यब्राह्मणेन स्वकन्यायाः, वैश्यजातित्वेन व्यवहृतस्य विश्वप्रसिद्धस्य भारतराष्ट्रसमुद्धर्तुर्महात्मगान्धेः पुत्रेण साकं 'क्षत्रिययथातिराजेन सह ब्राह्मणेम शुक्राचार्य्येण स्वकन्यायाः देवयान्या इव' समुद्रिक्तगुणकर्मसाम्यमवलोक्यैव विवाहो विहितः। अतएव भवता शास्त्राभिज्ञेन वर्णान्तरे विवाहः कथं कृतः ? इत्येवं केनचित्पृष्टेन तेनेत्थं तस्य समाधानमभिहितमपि तत्तद्गुणकर्मसाम्यं बोधयितुं—'न मया वर्णान्तरे विवाहः कृतः किन्तु समान एव वर्णे, वर्ण्यन्ते निरूप्यन्त इति वर्णास्तत्तद्गुणकर्मादयः, द्वयोः समाना एव सन्ति। यतोऽहं यादृशदेहवर्णवान् बेरिस्टरो वैष्णवः शाकाहारी रामनामप्रियो गीतापाठकश्च, तथा

महात्मा गान्धिरपि। अतएव मत्कन्यायास्तत्पुत्रस्य च समान एव वर्णो विद्यते, समानं शिक्षादीक्षादिकर्मापि। अतस्तयोर्मिथः स्नेहमूला विवाहाय स्वीकृतिरपि संजाता, मयाऽनुमोदिता च। एवं बहवो विवाहा गुणकर्मसाम्येन संप्रति स्वतन्त्रे भारते राष्ट्रे प्रवर्तमानाः सर्वैरप्यवलोक्यन्ते इति।

## पौराणिक वचनसंमतिः

एवं तत्तद्गुणकर्मण्येव वर्णविभागस्य बीजमितीमसर्थं साधयितुमपरे पुनः पौराणिका अपि महत्याऽऽरभटचा तत्तद्गुण-कर्मशून्यां ब्राह्मणत्वादिजातिं खण्डयन्तः प्राहुः। तथाहि—'किं ब्राह्मणाः ये सुकृतं त्यजन्ति ? किं क्षत्रियाः लोकमपालयन्तः ?। स्वधर्महीना हि तथैव वैश्याः, शूद्राः स्वमुख्यक्रियया विहीनाः?।। तस्मान्न गोऽश्ववत् कश्चित्, जातिभेदोऽस्ति देहिनाम्। कार्य-शक्तिनिमित्तस्तु संकेतः कृत्रिमो भवेत्।। एवं प्रमाणैः प्रतिषि-ध्यमानां सांकेतिकीं याति नरो व्यवस्थाम्। स्वकीयसिद्धां स्वमतैर्निषिद्धां न बुध्यते मूढमना वराकः।।' (भविष्य पु० अ० ४।११-१२-१३) इति। अर्थात् शमदमक्षमादयाविनयविवेकादि-लक्षणं सुकृतं=पुण्यं ये परित्यजन्ति, ते किं ब्राह्मणा भवितुम-र्हन्ति ? नैवेत्यर्थः। एवं शौर्यधैर्यदाक्ष्यबलादिक्षत्रलक्षणरहिताः अत एव लोकं=स्वकीयं राष्ट्रं अपालयन्तः=पालनं रक्षणमकु-र्वाणाः किं नाममात्रेण क्षत्रियाः भवितुमर्हन्ति ? नैवेत्यर्थः। तथैव कृषिवाणिज्यधनसञ्चयदानादिलक्षणेन स्वधर्मेण रहिताः किं वैश्या भवितुमर्हन्ति ? नैवेत्यर्थः। एवं स्वमुख्यसेवाशिल्प-कौशल्यश्रमादिरूपक्रियया रहिताः किं शूद्राः भवितुमर्हन्ति ? नैवेत्यर्थः। अत एव देहिनां=मनुजानां तत्तद्गुणकर्मादिकं विहाय वस्तुतः कश्चित् जातिभेदः=जातिवैलक्षण्यसाधकं

'गोऽश्ववत्' वर्णाकृतिभेदादिकं नास्ति किमपि। तत्तत्कार्याणां साधिकाः याः याः विद्याबलधनादिलक्षणाः शक्तयः, तन्निमित्तः=तत्प्रयोजितो ब्राह्मणत्वादिलक्षणः संकेतस्तु कृत्रिम एव स्यादित्यर्थः। विभक्तव्यवहारायैव प्रकल्पितो भवेदिति यावत्। 'शूद्रो ब्राह्मणतामेति, ब्राह्मणश्चैति शूद्रताम्। क्षत्रियो याति विप्रत्वं, विद्याद् वैश्यं तथैव च॥' (भ० पु० ४०।२५) 'शूद्राः देशान्तरं गत्वा ब्राह्मणं क्षत्रियं श्रिता। व्यापाराकारभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः॥ (भ० पु० ४१।३) इति। उत्तमगुणादिभिः शूद्रो ब्राह्मणत्वं एति=प्राप्नोति, एवं अधमगुणादिभिर्ब्राह्मणः शूद्रत्वं प्राप्नोतीत्यर्थः, एवं क्षत्रियोऽपि वैश्योऽपि विप्रत्वं याति=प्राप्नोतीत्यर्थः। ब्राह्मणं=ब्राह्मणत्वं, क्षत्रियं=क्षत्रियत्वं, भावनिर्देशोऽयम्। देशान्तरं गताः शूद्राः, ब्राह्मणाः क्षत्रियाश्च भवन्ति। प्रकल्पितैः व्यापाराकारभाषाद्यैर्विप्रतुल्यैः स्वनिष्ठं ब्राह्मणत्वक्षत्रियत्वादिकं प्रत्याययन्ति 'वयं ब्राह्मणाः क्षत्रियाश्च स्मः' इतीत्यर्थः। अत एव प्राच्यार्थगवेषणाशीला इतिहासविदो वदन्ति यत्—इदानींतना बहवः कोटयधिका ब्राह्मणत्वक्षत्रियत्वादिना व्यवह्रियमाणाः चित्पावनमराठाप्रभृतयो जनाः पूर्वं जात्यन्तरविशिष्टा आसन्निति।

## चित्तपावनविप्रोत्पत्तिकथा

तत्र प्रमाणत्वेन महाराष्ट्रादौ प्रसिद्धानां चित्तपावनविप्राणामुत्पत्तौ चेदृशी कथा स्कन्दपुराणस्य सह्याद्रिखण्डादौ श्रीशंकरेणोदिता—श्रूयते। तद्यथा—'एवं निवासं कुर्वत्सु, अकस्माद्दैवयोगतः। नीत्वा सागरमध्यस्थैर्म्लेच्छैर्बर्बरादिभिः॥ बहून्यब्दान्यतीतानि, तेभ्यो जाताश्च सन्ततिः। चितास्थाने तु सहसा ह्यागतांश्च ददर्श सः (परशुरामः)॥ का जातिः कश्च धर्मश्च?

क्व स्थाने चैव वासनम् ? ( निवासः )। एवं रामेण ते पृष्टा ऊचुः कैवर्तका इदम् ।। जातिं पृच्छसि हेराम ! जातिः कैवर्तकः स्मृतः । सिन्धुतीरे कृतो वासो व्याधकर्मविशारदः ।। चतुर्दश गोत्रकुलं स्थापितं चातुरङ्गके। · · · · सर्वे च गौरवर्णास्ते सुनेत्राश्च सुदर्शनाः। तेषां षष्टिकुलं श्रुत्वा पवित्रमकरोत्तदा ।। ब्राह्मण्यञ्च ततो दत्त्वा सर्वविद्यासुलक्षकम् । चितास्थाने पवित्रत्वात् चित्तपावनसंज्ञकाः ।।'इति । अधिकन्तु वैदिकसंपत्ति-संज्ञके हिन्दीग्रन्थे श्रीरघुनन्दनशर्मणा लिखिते ४६३।७० इति पृष्ठे द्रष्टव्यम् । ततः=तेभ्य इत्यर्थः ।

## ब्राह्मणोत्पत्तिमार्तण्डकथा

एवं ब्राह्मणोत्पत्तिमार्तण्डनाम्नि ग्रन्थे—भगवान् मर्यादा-पुरुषोत्तमः श्रीरामचन्द्रः किरातान् शूद्रान् ब्राह्मणान् कृत्वा तेभ्यः पितुः श्राद्धकर्म वने समाचरत्, पश्चात् तेभ्यो रामोऽब्र-वीत्, यूयमद्याऽऽभ्य ब्राह्मणा एव भवन्तु, ते रामाज्ञया तथैव संवृत्ताः,सांप्रतमपि-आभीरभिल्लनामधेयेन ते व्यवह्रियन्ते' इत्या-दिकमितिवृत्तं ते प्रदर्शयन्ति (गुणकर्मवादिनः)। तत्रत्याः कति-चिदनुसंधेया इमे श्लोकास्तैः पाठकानां निश्चयार्थमुपक्षिप्यन्ते । यथाहि-'वनाद्वनान्तरं गच्छन्,विन्ध्याद्रिनिकटे यदा। श्राद्धं प्राप्तं कुदेशेऽत्र कथं कर्म भविष्यति ?।। विप्राभावेन चिन्तायां निमग्ने सति राघवे । तत्रैव पञ्च कैवर्ताः संप्राप्ता वनचारिणः ।। तान् पप्रच्छ रामो वै के यूयमि ? ति तेऽब्रुवन् । वयं किराताः राजेन्द्र ! किं कार्यं वद नः प्रभो !।। रामो विचिन्तयामास करिष्यामि द्विजानिमान् । चकार भूमौ रेखानां सप्तकं तदनन्त-रम् । उल्लंघयन्त्विमा रेखा इति तानब्रवीत्प्रभुः ।। प्रथमायां शुद्धभिल्लाः, द्वितीयायाञ्च शिल्पिनः । तृतीयायां च शूद्रा वै,

सच्छूद्राश्च ततः परम् ।। पञ्चम्यां हि वयं वैश्याः, षष्ठयां वै क्षत्रिया इति । सप्तम्यां तु वयं विप्रा इति रामो वचोऽब्रवीत् ।। अथ रामश्च तैः साकं श्राद्धकर्म समाचरत् । अथ तानब्रवीद्रामः पूर्वमार्गेण गच्छथ ।। हे राम ! ते कृपालेशात् ईदृशीं पदवीं गताः । न गच्छामः पुनर्योनिं कैवर्ताख्याधमां प्रभो ! । तदा रामोऽब्रवीत्तान् वै यूयं भूमौ द्विजातयः । भवन्तु भिल्लनामानश्चाभीरापरनामकाः ।।' ( ब्रा० उ० मा० द्वाविंशतितमे २२) प्रकरणे इति ।

## परशुरामनिर्मितब्राह्मणवर्णनम्

यथा भगवता रामेण पितुः श्राद्धकर्मणे कैवर्ताः सप्तानां स्वनिर्मितरेखाणामुल्लंघनमात्रेण ब्राह्मणाः कृताः, तथा परशुरामेण भार्गवेणापि केरलदेशमब्रह्मण्यं प्रेक्ष्य तत्रत्येभ्यः कवर्तेभ्यो विशिष्टाचारपद्धतिं समुपदिश्य, तेषां च कण्ठे यज्ञसूत्रं निधाय ते ब्राह्मणा विहिताः । इति स्कन्दपुराणे सह्याद्रिखण्डस्योत्तरकाण्डेऽपीत्थं वर्ण्यते—'अब्रह्मण्ये तदा देशे ( केरले ) कैवर्तान् प्रेक्ष्य भार्गवः । विशिष्टाचारमादिश्य यज्ञसूत्रमकल्पयत् ।। स्थापयित्वा स्वकीये सः क्षेत्रे (केरले) विप्रान् प्रकल्पितान् । जामदग्न्यस्तदोवाच सुप्रीतेनान्तरात्मना ।।' ( १०३।३१ ) इत्यादिना भार्गवपरशुरामप्रसादात् कैवर्तैरपि महाशूद्रैर्ब्राह्मणत्वलाभः सम्पादित इति विज्ञायते । अत एव ते परशुरामप्रकल्पिता ब्राह्मणाः संप्रत्यपि नम्बुद्रि (नम्पूतिरि) नाम्ना प्रसिद्धाः सन्ति । नम्पू (केरलभाषायां)=पतवार इति हिन्दीभाषायाम्—नौकायाः संचालनप्रयोजको हस्तसंचालितो दण्डविशेषः । तिरि (केरलभाषायां) इत्यस्य परित्यागोऽर्थः 'हटाना' इति हिन्दीभाषायाम् । इयं किल संज्ञा तेषां प्राक्कालिकं वृत्तं सूच-

यति। संप्रति ते वयं सर्वोत्तमाः पवित्राचारनिष्ठाः विप्रोत्तमाः स्मः इति स्वनिष्ठं प्रभूतं गौरवं प्रकटयन्ति। संप्रत्यपि विवाहसमये ते मत्स्यस्पर्शं कुर्वाणाः स्वपूर्वतमपुरुषनिष्ठमत्स्योपजीवित्वं ज्ञापयन्तीति 'भारतवर्षमें जातिभेद' नाम्नि हिन्दीपुस्तके स्पष्टम्।

सति चैवं यदाहुर्भविष्यपुराणेऽपि पौराणिका अपि—'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। प्रोद्वहन्ति शुभां कन्यां, शुद्धब्राह्मणजां नराः॥ अथवाऽधीत्य वेदांस्तु क्षत्रवैश्यास्तु वा नराः। गौडपूर्वां कृताग्नियुर्जातिं वा दाक्षिणात्यजाम्। अपरिज्ञातशूद्रत्वात् ब्राह्मण्यं याति कामतः॥ तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः॥'(भ० पु० ४१।४-५-६) इति। कामतः= स्वच्छन्दतः।

एव भूयांसोऽवरवर्णजाः शूद्रा अपि बलशौर्यादिकमवाप्य भूप्रदेशमात्मसात्कृत्य राजानः क्षत्रियाः संवृत्ताः। एवमुत्तरप्रदेशस्थाः प्राक्कालिकाः भटनागरसंज्ञया संप्रत्यपि प्रसिद्धाः कायस्था अपि सहस्राधिकसंवत्सरेभ्यः पूर्वं गुर्जरदेशं समवाप्य केचन नागरब्राह्मणाः केचन नागरवैश्याश्च संवृत्ता इतीतिहाससमालोचकानां नातीवतिरोहितम्। एवं डॉ० भाण्डारकरस्तु तत्तद्गोत्रोपाधिनामुभयत्र समानरूपेणोपलब्धत्वात् बंगदेशीयकायस्थाः गुर्जरदेशीयनागराश्च मूलतः एक एव सन्तीति वदति। विशदीकृतोऽयमर्थः—'भारतवर्षमें जातिभेद' इतिसंज्ञके हिन्दीभाषापुस्तके, कलकत्ताशान्तिनिकेतनतः प्रकाशिते। एवमन्यत्र जातिसमालोचनादौ स्पष्टम् द्रष्टव्यं तत्स्पष्टावगतिकामेनेति।

## सत्यकामजाबालवृत्तान्तः

एवं छांदोग्योपनिषदि सत्यकामजाबालोपाख्याने सत्य-

कामस्य जाबालस्य स्वपितृ-जाति-गोत्र-ज्ञानरहितस्य सत्यवचनगुणमात्रेण ब्राह्मणत्वप्रतिपादनमुपलभ्यते। तथाहि—प्राक् सत्यकामेन विद्यालाभाय गुरुकुलं प्रवेष्टुकामेन स्वकीया मातेत्थं पृष्टा—'किं गोत्रो न्वहमस्मीति' 'सा हैनमुवाच, नाहमेतद्वेद तात ! यद्गोत्रस्त्वमसि।' बह्वहं चरन्ती, परिचारिणी यौवने त्वामलभे।' (छां० उ० ४।४।२) इति। अयमर्थः—अहमेकाकिनी युवती जीवननिर्वाहाय बहु चरन्ती=इतस्ततोऽनेकस्थलं गच्छन्ती, परिचारिणी=विविधानां जनानामृषीणाञ्च विविधां परिचर्यां=सेवां कुर्वाणा सती, यौवने=मदीये यौवनकाले, त्वां पुत्ररूपेणाहं अलभे=लब्धवती। साऽहं नैव जानामि—बहूनां समागमे सति, कस्मात्त्वं संभूतोऽसीति, अर्थात्—कस्त्वदीयः पिताऽभूदिति। पितृज्ञानमन्तरा तज्जातिज्ञानं तद्गोत्रज्ञानञ्च कथं संभवेत् ? इति। अतस्तव पितुर्नामाऽप्यहं न जानामि कुतस्तज्जातिं, कुतस्तरां तद्गोत्रमप्यहं जानीयामिति ?। अतो जबाला माताऽहमस्मि, त्वं तु मदीयः पुत्रः सत्यकामोऽसीत्येतावदेवाहं जानामि। एतदेव स्पष्टतया निर्भयतया च गुरवे वक्तव्यम्। एवं सत्यकामाय पुत्राय मात्राऽपि निष्कपटं लोकविगर्हितमप्येतादृशं निर्भयं सत्यमेव वचः संभाषितम्। यदि सत्यकामस्य कश्चन पिता जीवितो वा मृतो वा 'बृहस्पतिभार्यया तारया प्रबोधितः स्वपुत्रस्य बुधस्य चन्द्रमा पितेव, तत्पृथक्तया विज्ञापितः स्यात्तन्मात्रा जबालया, तदा तत्पार्श्ववर्तिभ्यः तत्सम्बन्धिभ्योऽपि जनेभ्यः तज्जातिगोत्रादिज्ञानं सुलभं भवेदिति। परन्तु तत्पितुः तत्पृथक्तया ज्ञानाभावादेव तन्मात्रा स्पष्टतया 'नाहमेतद्वेद' इति सत्यमेवाभिहितम्।

तस्य सत्यकामजाबालस्य गुरुकुले समागतस्य प्रशस्तामाकृति दृष्ट्वा स्वपरनिष्ठघृणाजनकमपि तदतिस्पष्टं निर्भयं सत्यवचनं च श्रुत्वा हारितद्रुमतो गौतम आचार्यः प्रसन्नः सन् इदमुवाच—'नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याहर, उप त्वा नेष्ये, न सत्यादगा इति' ( छां० उ० ४।४।५ ) एतत्=निष्कपटं सत्यवचनं, अब्राह्मणः=ब्राह्मणभिन्नो वि=विशेषतयाऽतिस्पष्टतया वक्तुं नार्हति, अर्थात्—अतिस्पष्टं निर्भयं निरभिमानत्वपोषकं सत्यवचनमेवास्ति ब्राह्मणलक्षणम्, तेन लक्षणेन संयुक्तत्वात्, स्वपितृ—जाति—गोत्रज्ञानरहितमपि त्वामहं ब्राह्मणमेव मन्ये, न ब्राह्मणभिन्नमिति । अत एव त्वं समिधं हवनाय हे सोम्य !=प्रियदर्शन ! आहर=आनय, त्वामहमुपनेष्ये=तवाहमुपनयनसंस्कारं करिष्यामि, यतस्त्वं सत्यात्—ब्राह्मणलक्षणात् न अगाः=प्रचलितवानसीत्यर्थः, परं धर्मं सत्यं रक्षितवानसीति यावत् । उक्तञ्च महाभारते—'य एव सत्यान्नापैति, स ज्ञेयो ब्राह्मणस्त्वया ।' (म० भा० वन० २८।४) इति ।

एतेनेदं विज्ञायते—यत् तदानींतनाः कुलपतयो विद्वद्धौरेयाः आचार्य्या अपि—विशालहृदयाः सरलस्वभावाः समुदारचेतसश्चासन् । ये किल स्वपुरोवर्तिनं विद्यार्थिनं दृष्ट्वा, तद्वचनं च श्रुत्वा तस्य योग्याधिकारञ्च विनिर्णीय, तस्मै प्रशस्ततत्तद्गुणकर्मनिबन्धनां तां तां तद्योग्यां कक्षां समर्प्य स्वराष्ट्राभ्युदयाय वर्णविभागं व्यवस्थापयामासुः ।

अत एव यजुर्वेदस्य काठकसंहितायां ब्राह्मणपरिचयस्य न ब्राह्मणमातृपितृजन्यत्वलक्षणजात्याऽपि तु प्रशस्तविद्यादिगुणतः एव कर्तव्यत्वप्रतिपादनमित्थमुपलभ्यते । यथाहि—'किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्?। श्रुतं चेदस्मिन् वेद्यं हि, स पिता

स पितामहः ॥' ( ३०।१ ) इति । अयमर्थः—कस्मिन् समये केनचित् कश्चन सद्विद्यादिगुणाढ्यो महर्षिः—'भवतः कः पिता का च माताऽस्ति, अर्थात् तव पित्रोः किं जात्यादिवैशिष्ट्यं विद्यते?' इति पृष्टः । तदीयं प्रश्नं श्रुत्वा स विद्वद्वरो महामना महर्षिर्वदति-ब्राह्मणस्यार्थात् ब्राह्मणत्वाभिव्यञ्जक—तत्तत्प्रशस्तविद्यादिसात्त्विकगुणकर्मविशिष्टस्य किं पितरं वा मातरं वा त्वं पृच्छसि । अर्थात् भवतु यः कोऽपि पिता वा माता वाऽस्य शरीरस्य समुत्पादकः, तेन किं ? तत्तत्कुले शरीरजन्मनो दैवायत्तत्वात् । 'दैवाधीनं कुले जन्म, मदायत्तन्तु पौरुषम् ।' इति स्मरणात् । यद्यस्मिन् शरीरे वेद्यं श्रुतं=वेदनीयं-अभ्यर्हणीयम्—सद्विद्यादिलक्षणं प्रशस्तं ब्राह्मणत्वप्रयोजकं गुणकर्मादिकं विद्यते, स एव पिता स एव पितामहो वेदितव्यः, इति तेन स्पष्टमेवाभिहितम् ।

## कवषस्य-ऐलूषस्य गाथा

ऐतरेयके ब्राह्मणे-कवषस्यैलूषस्य शूद्रस्यापि महता तपसा द्विजोत्तमत्वस्यावाप्तिर्मन्त्रद्रष्टृत्वरूपस्य-महर्षित्वस्य चावाप्तिः—'ऋषयो हि वै सरस्वत्यां सत्रमासत । ते कवषमैलूषं सोमादनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति' ( ऐ० ब्रा० ८।१ ) इत्यादिग्रन्थेन समाम्नायते । तत्रत्यस्तस्येत्थं वृत्तान्तः—शूद्रो हि कवषो यज्ञे प्रविश्य दीक्षां गृहीतवान् । तस्य शूद्रत्वं विज्ञाय सावेशमृषिभिस्तत्रत्यैः स बहिष्कृतः । अस्यानधिकारचेष्टायाः कटुफलं विधातुं—'सरस्वत्याः पावनं जलमयं मा पिबतु, किन्तु पिपासयैवायं म्रियतामि' त्यभिप्रेत्य निर्जले मरुप्रदेशेऽयं वराकः कवषः ऋषिभिस्तैर्निक्षिप्तोऽभूत् । तथा चोक्तं—'तं बहिर्धन्वोदवहन्,

अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति।' ( ऐ० ब्रा० ८।१ ) इति। तं कवषं सरस्वतीतीराद् बहिः=दूरे, धन्व=जलरहितां मरुप्रदेशभूमिं प्रति उदवहन्=उद्धृतवन्तः—बलादपसारितवन्तः। धन्वदेशे बलात् प्रेरयितॄणामयमभिप्रायः- अत्र जलवर्जिते देशे एनं कवषं पिपासा मारयतु, सरस्वत्या नद्याः पवित्रमुदकमयं पापिष्ठो मा पिबत्वित्यर्थः। तत्र गतोऽयं तीव्रेण तपसाऽनन्यसाधारणविज्ञानशक्तिमवाप। तया किल 'अपां नपादि' त्यादि ऋग्वेदीयसूक्तसमूहस्य, तत्रावस्थित-विविध-मन्त्राणाञ्चायं द्रष्टा भूत्वा प्रमुखो महर्षिरभवत्। ततो भूयोभिर्महर्षिभिरयमभ्यर्हणीयतामापेदे। तस्य इलूषपुत्रस्य कवषस्य तपःसामर्थ्येन संजाते विशुद्ध एकाग्रे हृदये स्वयंप्रतिभातमन्त्रप्रार्थनाप्रभावात प्राक् कुरुक्षेत्रे प्रवहनशीला सरस्वती नदी मरुप्रदेशेऽपि मधुरकलकलनिनादवती दर्शनीयरूपा प्रवाहिताऽभूत्। तदेतदाम्नायते—'एतदपोनप्त्रीयमपश्यत् 'प्रदेवत्रा ब्रह्मणे गातु रेत्विति' ( ऐ० ब्रा० ८।१ ) इति। 'प्रदेवत्रेत्यादिकमपोनप्तृदेवताकं सूक्तं तपसा विशुद्धे हृदयेऽपश्यत् इत्यर्थः। मरुप्रदेशवास्तव्यानां मधुरस्वच्छजलाभावाद्विविधां पीडामनुभवतां कृतेऽयं महान् प्रमोदावसरः संजातः। एतस्याः नदीतमायाः देवीतमायाः विविधसुखप्रयोजिकायाः सरस्वत्याः समानयने कारणभूतोऽयमेव विशिष्टसामर्थ्यशाली कवषः ऐलूषो महर्षिरेवास्तीति विज्ञाय तदानींतनाः सर्वेऽपि जनाः तस्मै प्रभूतां कृतज्ञतामावेदयाञ्चक्रुः। दण्डवन्नमस्कारांश्च श्रद्धयाऽर्पयामासुरिति। इयं किल सरस्वती कुरुदेशे मरुप्रदेशेऽपि च बहुकालात् प्रवाहिताऽपि दुष्टप्रारब्धयोगात् हिमालयीय-प्लक्षसरोवरस्य विनाशात् भारते वर्षे सर्वथा विनष्टाऽभूदि-

तीतिहासविदो विदांकुर्वन्त्येव । अत एव तद्विषये 'लुप्तधारा गुप्तधारा सरस्वती' तीदृशः सर्वजनप्रसिद्धः प्रवादोऽजायतेति । यदाह—'तं सरस्वती समन्तं पर्यधावत् ।' ( ऐ० ब्रा० ८।१ ) तेन जपितेन सूक्तेन सरस्वती नदी तं कवषं मरुप्रदेशेऽवस्थितं पिपासाव्याकुलं पर्यधावत्=परितः प्रवाहवेगेन प्रवृत्ताऽऽसीदित्यर्थः । ऋग्वेदस्य दशममण्डलस्य त्रिंशत्तमे सूक्ते वर्तमानमन्त्रप्रार्थना तस्यासीत्संक्षेपत ईदृशी । यथाहि—'अपां नपान्मधुमतीरपोदाः ।' ( ऋ० १०।३०।४ ) इदं किल-इलूषपुत्रस्य कवषस्यार्षं त्रैष्टुभं अब्देवताकं, अपां नपाद्देवताकं वा । हे अपां नपात्=परमेश्वर ! अपां-क्षीरसमुद्रजलानां मध्ये वर्तमानः, नपात्=नम्यतमः-अप्स्वन्तरवस्थितं तं नारायणाख्यं देवमभिलक्ष्य सर्वे भक्ता अतिशयेन प्रणता भवन्तीत्यतः क्षीरसमुद्रशायी सर्वभक्तजननमस्करणीयो नारायणो भगवान् 'अपां नपादि' त्युच्यते । यद्वा नपात्=अविद्यमानः पातः-च्युतिर्यस्य सोऽच्युतो देवो 'नपात्' इत्यनेनाभिधीयते । 'हिरण्यरूपः स हिरण्यसंदृक् अपां नपात्सेदु हिरण्यवर्णः ।' ( ऋ० २।३५।१० ) इति श्रुतेः । स त्वं मधुमतीः=मधुररसयुक्ताः, अपः=सरस्वतीनदीरूपाणि पवित्रजलानि, दाः=अस्मभ्यं मरुप्रदेशे वर्तमानेभ्यो देहि । 'याभिः सोमो मोदते हर्षते च, कल्याणीभिर्युवतीभिर्न मर्यः ।'( ऋ० १०।३०।५ ) 'देवमादनं प्रहिणोतनापः ।' ( ऋ० १०।३०।७ ) इति । याभिः=अद्भिः-सारस्वतैः पवित्रजलैः सोमो देवो मोदते=मुदितो भवति, हर्षते च । तत्र दृष्टान्तः—न=यथा, मर्यः=मनुष्यः, कल्याणीभिः=कमनीयाभिः-सुन्दरीभिः,युवतिभिः=तरुणीभिः=स्त्रीभिः मोदते तद्वत् । हे देवा ! अस्माकं देवमादनं=देवानामिन्द्ररुद्रादीनां

मदरूपस्य हर्षस्य जनयितृ यज्ञसदनं प्रति आपः=सारस्वत-जलानि, मरुप्रदेशे प्रहिणोतन=गमयत-प्रापयतेत्यर्थः । 'प्रास्मै-हिनोत मधुमन्तमूर्मि गर्भो यो वः सिन्धवो मध्व उत्सः ।' ( ऋ० १०।३०।८ ) हे सिन्धवः=स्यन्दनशीलाः सरस्वती-जलानि, वः=युष्माकं, यः, मध्वः=मधुररसस्य गर्भः=सारभूतः, उत्सः=उत्स्यन्दनः-प्रस्रवणः, तं मधुमन्तं, ऊर्मिं=अप्संघातं-पवित्रजलसमूहं अस्मै=अस्माकं-यज्ञस्याधिष्ठात्रे इन्द्राय-परमात्मने प्रहिनोत=प्रगमयत । इत्येवं तेन देवसमुदाय-रूपो नदीजलाधिष्ठातृरूपो वा भगवान् पवित्रजललाभाय प्रार्थितोऽभूदिति तस्य विशिष्टसामर्थ्यशालिनीं प्रार्थनां श्रुत्वा-'आग्मन्नाप उशती बर्हिरेदं न्यध्वरे असदन्देवयन्तीः ।' ( ऋ० १०।३०।१५ ) उशतीः=उशत्यः-कामयमानाः आपः=सरस्वती-पवित्रजलानि, इदं-बर्हिः=वेदिस्तरणं-अस्मद्यज्ञं प्रति आग्मन्=आगच्छत इत्यर्थः । अस्मद्यज्ञं प्रति आ=आगत्य च अध्वरे=अस्मदीये यज्ञे देवयन्तीः=देवान् कामयमानाः-तर्पयितुमिच्छन्त्यः इत्यर्थः, नि-असदन्=न्यसीदन्-निवासं चक्रुः इति यावत् । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति–'तस्माद्धाप्येतर्हि परिसारक-मित्याचक्षते, यदेनं सरस्वती समन्तं परिससार ।' ( ऐ० ब्रा० ८।१ ) इति । यत्=यस्मिन् स्थाने सरस्वती नदी, एनं कवषं परिससार, तत्स्थानमेतर्हि-अपि=एतस्मिन्नपि काले तीर्थ-विशेषाभिज्ञाः पुराणकर्तारः परिसारकमित्येतन्नाम्ना व्यवहरन्ति इत्यर्थः ।

इत्येवं तस्य कवषस्य प्रत्यक्षं सामर्थ्यं मरुप्रदेशेऽपि सरस्वती-समानयनलक्षणं–मन्त्रद्रष्टृत्वलक्षणञ्च ज्ञात्वा सर्वेऽपि महर्षयस्तं धन्यं धन्यमभिधाय विश्वामित्रादिवत् तस्मै ब्रह्मर्षिपदवीं समर्प-

यासासुः । अनया गाथयेदं स्पष्टमवगम्यते—यत्-पूर्वमुत्तमगुणकर्माभावात् तिरस्कृतो यज्ञाद्बहिष्कृतः कवषैलूषोऽप्ययमुत्कृष्टगुणकर्माणि समवाप्याधमत्वं विहाय विशिष्टसामर्थ्यशाली भूत्वा सर्वोत्तमः पूज्यश्चाभवदिति । अत एव ब्राह्मणोत्पत्तिमार्तण्डेऽपीदमभिहितं—'सर्वज्ञातिषु चाण्डालाः, सर्वज्ञातिषु ब्राह्मणाः । ब्राह्मणेष्वपि चाण्डालाः चाण्डालेष्वपि ब्राह्मणाः ॥' (५।४५) इति । एतदभिप्रेत्यैव भगवद्रामानुजाचार्येणाप्युक्तम्—'न शूद्राः भगवद्भक्ताः, विप्रा भागवताः स्मृताः । त एव शूद्रा विज्ञेयाः, ये चाभक्ता जनार्दने ॥' इति ।

## भूयसां प्रसिद्धानां वसिष्ठपराशरव्यासादीनां महर्षीणामपि महतस्तपसः प्रभावादेव ब्राह्मण्यलाभः

वसिष्ठस्मृतौ द्विचत्वारिंशत्तमाध्याये, भविष्यपुराणे ब्राह्मे पर्वणि षष्ठिकल्पे द्विचत्वारिंशत्तमाध्यायेऽपि च वसिष्ठपराशरव्यासादीनां ब्राह्मण्यलाभस्य प्रतिपादका इमे श्लोकाः समाना एवोपलभ्यन्ते । यथाहि—'आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः । गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् । विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः । बहवः कथ्यमाना ये कतिचित् तान्निबोधत ॥ जातो व्यासस्तु कैवर्त्याः, श्वपाक्याश्च पराशरः । शुक्यां शुकः कणादाख्यः, तथोलूक्याः सुतोऽभवत् ॥ मृगीजोऽथर्ष्यशृङ्गोऽपि वसिष्ठो गणिकात्मज ॥ मन्दपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते । माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसंभवः ॥ बहवोऽन्येऽपि विप्रत्वं प्राप्ता ये पूर्वमद्विजाः ॥ हरिणीगर्भसंभूतः ऋष्यशृङ्गो महामुनिः । तपसा ब्राह्मणो जातः, संस्कारस्तेन कारणम् ॥ श्वपाकीगर्भसंभूतः पिता व्यासस्य पार्थिव ! । उलूकीगर्भसंभूतः कणादाख्यो महामुनिः । तपसा

ब्राह्मणो जातः संस्कारस्तेन कारणम् ।। गणिकागर्भसंभूतो वसिष्ठश्च महामुनिः । तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ।। नाविकागर्भसंभूतो मन्दपालो महामुनिः । तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ।। इति । (वसिष्ठ-स्मृतिः अ० ४० श्लो० २२।२३।२४।२५।२६।२७।२८।२९।३०) (भ० पु० ब्राह्मे० पर्वणि अ० ४२। श्लो० १९।२०।२१।२२।२३।२४। २५।२६।२७) इति । अत्र खलु ब्राह्मण्यलाभप्रयोजकं तपस्तु विविधं श्रुत्यादिषु प्रतिपादितं मन्तव्यम्, 'स्वाध्यायप्रवचने एव तपः ।' (तै० उ० १।९) 'मनसश्चेन्द्रियाणाञ्च, ह्यैकाग्र्यं परमं तपः ।' (म० भा० शां० २५।४) 'ऋतं तपः, सत्यं तपः, श्रुतं तपः, शान्तं तपो, दमस्तपः, शमस्तपो, दानं तपो, यज्ञं तपः' (तै० आ० १०।१) ऋतं=एकाग्रेण मनसा परमार्थवस्तुचिन्तनम्, सत्यं=वाचा यथार्थप्रियभाषणम् । श्रुतं=वेदादिशास्त्राणां गुरुमुखाच्छ्रवणम्, शान्तं=शान्तिः रागद्वेषनिवृत्तिः, सकलकामनानिवृत्तिश्च, दमः= बाह्येन्द्रियाणां विषयासक्तिनिवृत्तिः । शमः=चाञ्चल्याभावः क्रोधादिराहित्यं वा, दान=परोपकारो धनादिना, यज्ञः=श्रौत-स्मार्तशुभकर्माणि । योगदर्शनस्य व्यासभाष्ये हि—'तपो द्वन्द्व-सहनम्, द्वन्द्वश्च जिघत्सापिपासाशीतोष्णादीनि । तपो न परं प्राणायामात्, ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति ।' (२।५२) 'ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।' (अथर्व०सं० ११।१७) इत्यनेन ब्रह्मचर्यमेव मृत्युविनाशकं तपः प्रतिपाद्यते । भगवद्गीतासु च शारीरादिभेदेन त्रिविधं तपः सप्तदशाध्याये निरूपितम् । एतादृशेन तपसा ये पूर्वं अद्विजाः आसन् ते विप्राः ब्राह्मणा बभूवुः । श्रियं=यशोगौरवं प्राप्ताः, कैवर्त्याः=मल्लाह-कन्यायाः मत्स्योदरीमत्स्यगन्धेति संज्ञायाः, श्वपाक्याः=श्वमांस-

पचनशीलायाश्चाण्डाल्याः । गणिकात्मजः=देववेश्योर्वशीपुत्रः इत्यर्थः । तेन=तस्मात् पूर्वोक्ततपःप्रभावात् जायमानः संस्कार एव सर्वोत्तमतालाभे कारणं प्रत्येतव्यम् । अत एव लौकिका अपि वदन्ति-नदीनां मूलं, महर्षीणाञ्च कुलं नान्वेषणीयमि' ति। किन्तु तेषामनन्यसाधारणचरित्रप्रभाव एव वेदितव्यः । न केवलं लोकाः वदन्त्यपि तु महाभारतेऽप्याहुः—'ऋषीणां च नदीनां च, साधूनां च महात्मनाम् । प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ।। तन्नात्र चिन्ता कर्तव्या महर्षीणां समुद्भवे । यथा सर्वगतो ह्यग्निः तथा तेजो महात्मसु ।।' (म० भा० शान्तिपर्वणि २६६।१०-१८) इति ।

यद्वा—तत्रैव भविष्यपुराणे ब्राह्मे पर्वणि षष्ठिकल्पे ब्राह्मण्यसंस्कारविवेकनाम्नो द्विचत्वारिंशत्तमाध्यायस्य प्रारम्भे इदमभिहितम्—'विद्वत्सदसि योऽप्याह, संस्काराद् ब्राह्मणो भवेत् । न्यायज्ञैः स निराकार्यो वाक्यैर्न्यायानुसारिभिः ।।' (४२।६) 'ज्ञानाध्ययनमीमांसानियमेन्द्रियनिग्रहैः । विना, संस्कारयोगेऽपि पुंसः शूद्रान्न भिन्नता ।।' इति । संस्कारः=गर्भाधानादिः, तस्य योगेऽपि ज्ञानादिभिर्विना, पुंसः=ब्राह्मणादेः, शूद्रात् न भिन्नता मन्तव्येत्यर्थः । 'संस्कारः क्रियमाणश्च न शूद्रे किं प्रवर्तते ?। संस्कृताङ्गश्च पापेभ्यो न ब्राह्मणादिर्निवर्तते ।। संस्कृतोऽपि दुराचारो नरकं याति मानवः । निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा ।।' (भ० पु० ४२।१३-१४-१५) 'गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ।' इत्यादिश्लोकैः तादृशा व्यासादयोऽपि मुनयो विप्रोत्तमा बभूवुः । अतः तेन=तस्मात् कारणात् संस्कारः किं कारणं भवति ब्राह्मण्यलाभे, न भवतीत्यर्थः ।

तथा चैते श्वपाक्यादिहीनतरजातिभ्यः समुद्भूता अपि पराशरवसिष्ठव्यासादयो मुनयो ब्रह्मर्षयो विप्रोत्तमाः सर्वैरपि मन्यन्ते । प्रणिपातादिभिः सर्वैर्ब्राह्मणप्रवरादिभिरपि वन्द्यन्ते पूज्यन्ते च । वेदमन्त्रद्रष्टृत्वेन स्मृत्यादिशास्त्रप्रणेतृत्वेन विशालबुद्धित्वेनाद्भुतसामर्थ्यशालित्वेन च निखिलैरपि समाद्रियन्ते । गोत्रप्रवर्तका ब्राह्मणवंशकारकाश्चेमे स्मर्यन्ते । न हि वर्णव्यवस्थायाः गुणकर्मावलम्बित्वं विना सर्वमेतत् संघटते । जात्या हि ये श्वपाककैवर्तादयः कथं विप्रोत्तमतामुपगच्छेयुः ? । गुणकर्मावलम्बित्वे पुनर्वर्णव्यवस्थायाः नैष दोषः संभवति । तत्र पक्षे हि ब्राह्मणाद्युचितगुणकर्मसम्पन्नानां ब्राह्मणत्वाद्यङ्गीकारात् । ब्राह्मणगुणकर्मसंयुक्ता ब्राह्मणा एव भवन्ति, क्षत्रियगुणकर्मसंयुक्ताः क्षत्रिया एव भवन्ति,एवमग्रेऽपि । यथा डॉक्टरगुणकर्मसंयुक्ताः ये केऽपि स्युः डॉक्टरा एव भवन्ति, वाक्कीलगुणकर्मसंयुक्ताः वाक्कीला एव भवन्ति, न डॉक्टरवाक्कीलमातापितृजन्यत्वेन तद्गुणकर्मरहिताः डॉक्टरा वाक्कीलाश्च भवितुमर्हन्ति, तथाऽभिधाने सति ते लोकोपहास्यतामेवोपगच्छेयुरिति । एवं हि तप आदिभिः प्रकृष्टगुणकर्मभिरेतेषां ब्रह्मर्षित्वं सुसम्पादमेव, अत एव स्मृतिपुराणादिषु स्पष्टं तथैव प्रतिपादितम्, तस्मात् गुणकर्मनिबन्धनैव वर्णव्यवस्थेति सिद्धम् ।

## विविधानि-प्रमाणानि

अत एव हरिवंशपुराणे ब्रह्माण्डपुराणे विष्णुपुराणेऽपि च तत्तद्वर्णप्राप्तेः तत्तद्गुणकर्मणामेव प्रयोजकत्वमभिधीयते । यथाहि—'नाभागरिष्टस्य पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ।' ( हरि० पु० ११।६।५८ ) इति । 'स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति । क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयं स

गच्छति ॥' (ब्र० पु० २२३।१४) इति। 'एभिस्तु कर्मभिर्देवि! शुभैराचरितैस्तथा। शूद्रो ब्राह्मणतां गच्छेत्, वैश्यः क्षत्रियतां व्रजेत्॥ (ब्र० पु० २२३।३२) 'तस्य त्रय्यारुणपुष्करिणौ कपिश्च पुत्रत्रयमभूत्। तच्च त्रितयमपि पश्चात् विप्रतामुपजगाम॥' (वि० पु० ४।१९) इति। 'न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न। न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः॥' (शुक्र० नीति० अ० १।३८) 'ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं न ब्राह्मणाः?। न वर्णतो न जनकात् ब्राह्मतेजः प्रपद्यते॥' ज्ञानकर्मोपासनाभिर्देवताऽऽराधने-रतः। शान्तो दान्तो दयालुश्च ब्राह्मणश्च गुणैः कृतः॥' (शुक्र० नीति० १।३९-४०) इति। 'क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्। तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः॥ न जातिः पूज्यते राजन्! गुणाः कल्याण-कारकाः। चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः॥' (बृहत्० गौतम-स्मृतिः अ० २१।९-१०) इति।

## तत्तद्गुणकर्मादिभिरेव भगवत्पादेनादिमशंकराचार्येणापि ब्राह्मणादिवर्णव्यवस्था विहिता।

आदिमशंकराचार्यप्रादुर्भावात् प्राक्काले भारतवर्षे पञ्चदशकोट्यधिका बौद्धाः ब्राह्मणादिवर्णविभागरहिता भगवदवतार-भूतरामकृष्णादिभक्तिशून्याः श्रुतिस्मृतिपुराणादिप्रतिपादितसनातनधर्मविमुखाश्चासन्। अशोकसम्राट्प्रभृतयो बहवो राजानो भूयांसो धनाढ्याश्च बौद्धधर्ममेव न तु वैदिकसनातन-धर्मं, प्रभूतया श्रद्धया मन्वाना अभवन्निततीतिहासविदो वदन्ति। भगवत्पादप्रयोजितवैदिकधर्मप्रचारसमये ते सर्वे किं भारतात् निष्कासिता वा विध्वंसिता वाऽभवन्निति? न वक्तुं शक्यते,

अशक्यत्वात् । अतस्ते हि भगवत्पादशंकराचार्यप्रभावेण बौद्ध-धर्मं परित्यज्य ब्राह्मणादिवर्गमण्डितहिन्दुरूपेण कथं संवृत्ताः ? इति प्रश्ने सति इदमेव सदुत्तरं वयं विद्महे—यथा पूर्वजाः शौनक-मन्वादयो महर्षयः तत्तद्गुणकर्मानुसारेण चातुर्वर्ण्यव्यवस्थामकुर्वन् । तथा पूर्वजप्रदर्शितमार्गेणैव वैदिकसनातनधर्मसमुद्धारको भगवत्पाद आदिमशंकराचार्योऽपि तेषु तेषु भारतीयेषु मनुजेषु तत्तद्गुणकर्मादीन् अभिवीक्ष्य तेषां तत्तद्ब्राह्मणादिवर्णेष्वभिरुचिं च विज्ञाय गुणकर्मादिभिरेव तान् प्राक् बौद्धान् सर्वान् ब्राह्मणादिहिन्दुरूपान् अकरोत् इति । भगवत्पादप्रचारानन्तरं पवित्रेऽस्मिन् भारते वर्षे एकोऽपि बौद्धो नावाशिष्यत । यस्मिन् शाक्ये वंशे स्वयं भगवान् बुद्धः प्रादुर्भूतः, तद्वंशप्रसूता अपि बौद्धधर्मं विहाय सर्वेऽपि पूर्ववत् श्रीरामकृष्णशिवादिभक्ताः वैदिकोपनयनगायत्रीमन्त्रलाभादिसंस्कारनिष्ठाः क्षत्रियाः एवाजायन्त । इति ।× अत एव निश्चितमिदं विज्ञायते-भगवत्पादाः श्रीमहेश्वरपरावताराः शास्त्रयुक्तिवचोवृन्दैः निखिलं बौद्धमतं समूलं निरस्य तत्तद्गुणकर्मादिभिरेव ब्राह्मणक्षत्रियादिवर्णाश्रम मण्डितं सनातनवैदिकधर्मं सर्वत्र प्रतिष्ठापयामासुः इति । 'इत्थं श्रीशंकराचार्यैर्ऋषिभिरिव पूर्वजैः । कर्मणैव कृते वर्णे सर्व-जातिनृसंग्रहः ।। चातुर्वर्ण्ये तथैवाभूज्जीविते लोकसंग्रहः । गुणकर्मानुसारेण राजाज्ञादिभिरप्युत ।। इति ।

---

×बौद्धाः ब्राह्मणादिवर्णव्यवस्थारहिता आसन् इति न्याय-वार्तिकतात्पर्यटीकायां महाविद्वान् वाचस्पतिमिश्रोऽप्याह—'न चैतेषामागमा वर्णाश्रमव्यवस्थाहेतवः, नो खलु निषेकाद्याः क्रियाः ( संस्कारलक्षणाः ) श्मशानान्ताः प्रजानामेते विदधति । ··· श्रुतिस्मृतिपुराणनिरपेक्षागममात्रेण प्रवर्तन्ते ।' । इति । ( न्या० वा० २।१।६८ ) ।

## सर्वत्रार्यनिर्माणं कर्तव्यम्

'कृण्वन्तो विश्वमार्यं हि, भारतीयार्यपूर्वजाः । काश्यपकण्वमुख्या हि श्रुत्यादेशानुसारतः ।। अनार्यान् म्लेच्छसंज्ञान् वा, विजातीयान् विधर्मिणः । अप्यार्यान् वर्णधर्मिष्ठान् सदाचारान् अकुर्वत ।। शुद्धाचारविचारैश्च, संयोज्य गुणकर्मभिः । अन्यः (श्रेष्ठः) संपद्यते वर्णः प्राग्जातिं परिवर्त्य नुः ।। तेनापि कर्मणा वर्णः इत्येवं सिद्ध्यति ध्रुवम् ।। जन्मना तु व्यवस्थायां न स्यात्तत्परिवर्तनम् । तस्माच्च कर्मणा वर्णो, न कुलेन न जन्मना । इत्येव शास्त्रमर्यादा शिष्टाचारानुमोदिता ।। इति । यदाहुः—भविष्यपुराणेऽपि पौराणिकाः—'तेषां मध्ये काश्यपश्च, सर्वज्ञानसमन्वितः । · · मिश्रदेशे सुनिर्गतः । सर्वान् म्लेच्छान् मोहयित्वा, कृत्वाऽथ तान् द्विजन्मनः ।। संख्या दशसहस्रं च नरवृन्दं द्विजन्मनां । द्विसहस्रं स्मृताः क्षत्राः वैश्याः शूद्रा इति स्मृताः ।।' ( भविष्य पु० प्रतिसर्गपर्व० खं० १ अ० ६ ) 'मिश्रदेशोद्भवा म्लेच्छाः काश्यपेनैव शासिताः । संस्कृताः शूद्रवर्णात्ते ब्रह्मवर्णमुपागताः ।। शिखासूत्रं समाधाय पठित्वा वेदमुत्तमम् । यज्ञैश्च पूजयामासुः देवदेवं शचीपतिम् ।।' (भ० पु० प्रति० खं० ४ । अ० २०।७५-७६) 'सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ । म्लेच्छान् संस्कृतमाभाष्य तदा दशसहस्रकान् ।। वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्ते महोत्तमे । सपत्नीकांश्च तान्म्लेच्छान् द्विजवर्णान् हि प्राकरोत् ।।' (भ० पु० प्रति० ४ अ० २१) इति ।

एवं 'वैदेशिका इहागत्य, शाकद्वीपादितः पुरा । बहवः संघशोऽभूवन् ब्राह्मणाः क्षत्रिया विशः ।। 'शाकद्वीपीय' इत्यादि-नाम्नाऽद्यापि जयन्ति ते । तेनापि कर्मणा वर्णो लोकाचारेण मीयते ।। याः पुराणेतिहासेषु वर्णोत्पत्तिकथाः स्मृताः । ताभिश्च

कर्मणा वर्णो ज्ञायते न तु जन्मना ।।' इति । एवं 'म्लेच्छास्ते वैष्णवाश्चाऽऽसन्, रामानन्दप्रभावतः । संयोगिनश्च ते ज्ञेयाः, रामानन्दमते स्थिताः ।। भाले त्रिशूलचिह्नं च श्वेतरक्तं तदाऽभवत् । कण्ठे च तुलसीमाला जिह्वा राममयी कृता ।।' (भ० पु० प्रति० खं० ४ । अ० २१) इति ।

एवं श्रीरामानुजाचार्यसंप्रदायेऽपि 'पल्ली' संज्ञकस्य शूद्रस्य कुले जातः शठकोपः, स च गुणकर्मभ्यामेव ब्राह्मण्यमधिगत्य श्रीवैष्णवसंप्रदायस्य परमाचार्यः संवृत्त इति दिव्यसूरिचरित्र-चतुर्थसर्गोक्तवचनैरेतत् विदितं भवति। 'श्रेष्ठः श्रीवैष्णवाचार्य्यः 'शठकोपो'ऽन्त्यजात्मजः । जन्मकर्मविशुद्धानां ब्राह्मणानामभूद् गुरुः ।।' इति । अन्ये च कतिपये–भक्तिसार-परकाल-मुनिवाह-नादयः श्रीवैष्णवाचार्याः शूर्पकार–भिल्ल–वेणुकाराद्यवरजाति-कुलजन्मान एव श्रूयन्ते । 'विचक्षणो विश्वविमोहहेतोः, कुलो-चिताचारकलानुषक्तः । पुण्ये महीसारपुरे विधाय विक्रीय शूर्पं विचचार योगी ।।' (दिव्यसूरिचरित्रे सर्ग० २ । श्लो० ५२) इति भक्तिसारस्यावरवर्णजत्वमभिहितम् । अन्येषामपि कुलादि-वर्णनं दिव्यसूरिचरित्रे भार्गवपुराणे प्रपन्नामृते च कर्णेहत्य द्रष्टव्यम् ।

एवं भविष्यपुराणे श्रीशंकराचार्य्येणापि म्लेच्छाः आर्यशै-वरूपेण संस्कृताः–'शंकराचार्य एवापि शैवधर्मपरायणः । · · · त्रिपुण्ड्रं च स्थितं भाले कण्ठे रुद्राक्षमालिकाः । मुखे गोविन्द-मन्त्रश्च तेषां (म्लेच्छानां) तत्र बभूव ह ।' (भ० पु० प्रति० प० ३ । खं० ४ । अ० २१ । ६७-६९) इति गम्यते । एवं गौडीयवैष्णवसंप्रदायेऽपि 'म्लेच्छाः कलाविशारदाः । · · · · कृष्णचैतन्यसेवकाः। दिव्यमन्त्रं गुरोश्चैव पठित्वा प्रययुः पुरीम् ।।'

इत्येभिर्भविष्यपुराणवचनैरप्यवगम्यते म्लेच्छानामार्यवैष्णवत्व-लाभः। तथा च 'कर्मणा विहितो वर्णो भविष्ये ब्राह्मपर्वणि। चत्वारिंशत्तमाद् दृश्यं तत्राध्यायचतुष्टयम् ।। साम्प्रतं त्वत्र लोकानां मूढग्राहेण जन्मतः। जातिरूपत्वमापन्नं चातुर्वर्ण्यं विपद्यते ।। तस्माद्वर्णव्यवस्थाया उद्धारः पुनरिष्यते। कर्मणैवेति लोकेषु तद्घोषोऽपेक्ष्यतेऽधुना ।। अतो मत्स्यपुराणेऽप्येवमनु-ज्ञायते हि—'वर्णाश्रमव्यवस्थानं, कार्यं कर्म समीक्ष्य च। स्वधर्म-प्रच्युतान् राजा स्वधर्मे स्थापयेत्तथा ।।' (अ० २१५। ६२) इति। अतः 'शकाश्च यवना हूणा अन्ये चाप्यन्यधर्मिणः। वैदेशिका विजातीयाश्चातुर्वर्ण्ये प्रवेशिताः ।।' इत्यलं पल्लवितेन।

## यजुर्वेदादेशः

'विभक्तारं हवामहे' (शु० य० वे० ३०।४) वयं ऋषयो गुणकर्मानुसारेण ब्राह्मणादिवर्णानां विभक्तारं प्रजापतिं हवामहे=आह्वयामः (उवटाचार्य्यः) 'ब्रह्मणे ब्राह्मणं, क्षत्राय राजन्यं, मरुद्भ्यो वैश्यं, तपसे शूद्रम्।' ( ३०।५ ) ब्रह्मणे=वेदाय—तदध्ययनप्रवचनतज्ज्ञानप्रचाराय कर्मणे ब्राह्मणं वयं ऋषयो नियोजयाम इति शेषः। अर्थात् तत्कर्मकर्तारं ब्राह्मणं वयं जानीमहे। क्षत्राय=क्षतात्—शत्रुसमाक्रमणदुष्टपीडादि-लक्षणात् लोकानां त्राणाय—रक्षणाय राजन्यं=क्षत्रियं वयं नियोजयामः, तत्कर्मकर्तारं क्षत्रियं वयमभ्युपगच्छामः। मरुद्भ्यः=प्राणेभ्य—अन्नदानादिभिः-लोकेषु प्राणसन्तोषप्रदानाय वैश्यं वयं नियोजयामः, कृषिगोरक्षावाणिज्यादिकर्तारं वैश्यं वयं विद्मः। एवं तपसे=लोकसेवाकर्मणे, 'तपः शूद्रस्य सेवनम्' इत्युक्तत्वात् शूद्रं वयं विनियोजयामः, तत्सेवाकर्मकर्तारं वयं शूद्रं जानीमः इति। अत एव ब्राह्मणादीनां सर्वेषामभ्युदयायेत्थं

प्रार्थना विहिता—'रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्॥' (यजुः० १८।४८) इति। रुचं=स्वस्वगुणकर्मधारणजन्यां कान्ति-शोभां, नः= अस्माकं, धेहि=स्थापय। कृधि=कुरु। विश्येषु=वैश्येषु, मयि= एतन्मन्त्रेण प्रार्थनाकर्तरि रुचा रुचं=विविधकान्तिपरम्प- रामित्यर्थः।

## तात्पर्यप्रकाशः

सत्ययुगे तु सर्वे—'एकवर्णाः समाभाषाः एकरूपाश्च सर्वशः। तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा॥ समं जन्म च रूपं च, म्रियन्ते चैव ताः (प्रजाः) समम्। अनिच्छाद्वेषसंयुक्ता (रागद्वेषाभावयुक्ताः) वर्तन्ते तु परस्परम्। तुल्यरूपायुषः सर्वाः अधमोत्तमवर्जिताः॥' (वा० रा० उ० का० स० :० श्लो० २१-२२) इति। एवं सत्ययुगस्यापरं नाम कृतयुगमपि—'आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः। कृतकृत्याः प्रजाः यस्मात्, तस्मात्कृतयुगं विदुः॥' इति निर्वचनात् एवं 'असृजद् ब्राह्मणा- नेव पूर्वं ब्रह्मा प्रजापतीन्।' (म० भा० शां० १८८।१) ततः पश्चात्-'त्रेतायां कर्मणैवाभूत् पूर्वं वर्णव्यवस्थितिः। तथैवा- द्यापि कर्तव्या लोकसंग्रहणक्षमा॥ यावच्च कर्मणा वर्णव्यव- स्थाऽऽसीत्प्रवर्तिता। तावल्लोके सुखं शान्तिः समृद्धिश्चाभव- द्भृशम्॥ यतः प्रभृति जात्यैव वर्णत्वं स्वीकृतं जनैः। तेनैव च कृतार्थत्वं वृत्तिसाङ्कर्यमेव च। स्ववृत्त्यनियतत्वं च, तत आरभ्य भारते। सुखाभावश्च दुःखं च घोरानिष्टमजायत॥ तस्माद- द्यापि कर्तव्यं कर्मणैव नियन्त्रणम्। वर्णाश्रमसमाजस्य यथापूर्व- मिति स्थितिः॥' (मा० भा०) अतः 'ब्रह्म-क्षत्रं हि सर्वेषां वर्णानां मूलमुच्यते। ब्रह्मक्षत्रप्रसूतास्तु वैश्याः शूद्राश्च

मानवाः ॥' ( म० भा० शां० ६५।१४ ) इति कथनं गुणकर्मवाद एव सुतरां संगच्छते । 'ब्राह्मणः संभवेनैव देवानामपि दैवतम् ।' ( मनु० ११।८४ ) 'जन्मनैव महाभागो ब्राह्मणो नाम जायते ।' ( म० भा० अनु० ७०।१ ) ईदृग्वाक्यैर्मनुष्याणां वर्णसम्पत्स्वभावजा । बोध्यते, न तु वर्णानां जन्मनैव व्यवस्थितिः ॥ स्वभावप्रभवैरेव गुणैः पुंसां शमादिभिः । वर्णो निश्चीयते पूर्वं पश्चाद्वृत्त्या नियम्यते ॥ इति । अयं भावः- कर्मणा-स्वभावजेन शमशौर्यादिना वर्णः ब्राह्मणत्वादिः सिद्ध्यति, निर्णीतश्च भवति । अथ च कर्मणा अध्यापनयुद्धादिना जीवनौपयिकेन वृत्तिरूपेण 'वर्णः' सम्यग्व्यवस्थितो भवति । जातमात्रस्य तावदवर्णस्य शिशोः स्वभावजेन शमशौर्यादिगुणकर्मणा वर्णः पूर्वं निश्चीयते, ततस्तदनुकूलैः संस्काराचारादिभिर्वर्णत्वमापादितस्य तस्य तद्वर्णोचिता 'वृत्ति'-र्व्यवस्थाप्यत इति ।

तथा च—'वंशानुक्रमसिद्धान्तः प्रकृत्याऽपि पराहतः । प्रत्यक्षेण विरुद्धश्च तस्माद्वर्णो न जन्मना ॥ प्रत्यक्षं दृश्यते चैतज्जन्मवर्णाभिमानिषु । वंशानुक्रमणं नास्ति सत्त्वादिगुणसम्पदाम् ॥ प्रतिशतं नवत्यां हि नैषु वंशक्रमागताः । तत्तद्वर्णोचिताः सन्ति शमशौर्यादयो गुणाः ॥ प्रत्युतानुक्रमात्तेषां वैपरीत्यं विभाव्यते । ब्राह्मणम्मन्यवंशेषु यथैते शूद्रधर्मकाः । शूद्रवंश्याश्च भूयांसो ब्राह्मैः क्षात्रैः स्वभावजैः । वैश्यधर्मैश्च सम्पन्नाः संदृश्यन्ते तथेतरे ॥ तस्माद्यत्र क्वचिद्वंशे यस्तु यद्वर्णसम्पदा । संपन्नो जायते सः स्यात्तद्वर्ण इति निश्चयः ॥' इति । (मा० भा०)

## वर्णनिर्वचनम्

'वृ' संवरणे, 'वृङ्' संभक्तौ, 'वृञ्' आवरणे इति धातवोऽपि

वर्णविषयेऽनुसंधेयाः। 'वर्ण' स्तुति--विस्तार--शुक्लादि--उद्युक्ति-दीपने।' इति कविकल्पद्रुमः। वर्णयति--वर्णापयति--शुक्लादि-वर्णं करोति--उद्युङ्क्ते दीप्यत वेत्यर्थः। तथा च वर्ण्यते--प्रेर्यते स्वधर्मेण समाजस्य योगक्षेमयोः, वर्णयति--प्रेरयति स्वकर्मसु परस्परम्। वर्णयति--उद्युङ्क्ते स्वकर्तव्ये, वर्णयति--दीप्यते वर्चः-पराक्रमैश्वर्यप्रभृतिभिः,वर्णयति--विस्तृणाति--विस्तारयति वा अर्थाद् अभिवृद्धि गमयति समाजम्, आवृणोति--आच्छादयति-गोपायति--समाजं रक्षति, स्वकर्तव्यपरिपालनेन, व्रियतेऽनेन यथायोग्यं स्वभावानुगुणा वृत्तिः, व्रियतेऽसौ गुणकर्मानुसारतः तत्तद्वर्णत्वाय महाजनैः सामाजिकैः, एवमादयो वर्णशब्दार्था अवगन्तव्याः।

अत एव 'ब्रह्म हि ब्राह्मणः' 'क्षत्रं हीन्द्रः (शतपथब्राह्मण० कां० ५ अ० १ ब्रा० १) 'बाहू वै मित्रावरुणौ।' (श० ब्रा० ५।४।३) इति तत्तद्गुणकर्म द्योतयितुं समाम्नायते। 'वर्णो वृणोतेरिति' निरुक्तप्रामाण्याद् वर्णीयाः--वरीतुमर्हाः स्वीकर्तुं योग्याः गुणाः कर्माणि च। तान् तानि च यथायोग्यं दृष्ट्वा व्रियन्ते ये ते वर्णाः। ब्रह्मणा वेदेन तदुक्तसदाचारेण परमेश्वरस्योपासनेन ज्ञानेन च सह वर्तमानो विद्याविनयशमदमादिगुणयुक्तः पुरुषो ब्राह्मणो भवितुमर्हति। तथैव क्षत्रं=क्षत्रियकुलं, इन्द्रः=परमैश्वर्यवान् 'इदि परमैश्वर्ये' स्मरणात्। शत्रूणां क्षयकरणात् युद्धोत्सुकत्वाच्च धर्मदेशप्रजारक्षणतत्परः इन्द्रो भवितुमर्हति क्षत्रियः। मित्रः=वैश्यः—सर्वेभ्योऽन्नरसादिसमर्पणेन सुखदाता, वरुणः=शूद्रः सेवाकर्मधारणेन श्रेष्ठः, इमावेव मित्रावरुणौ ब्राह्मणस्य क्षत्रियस्य च द्वौ बाहुवत् उपकारकौ भवेतामित्यर्थः।

## जातिवर्णस्वरूपयोरस्ति पार्थक्यम्

यतो याज्ञवल्क्यस्मृतिमिताक्षराटीकाया-( १।९० ) मिदमभिहितम्--प्रत्यक्षगम्या जातिर्भवति, ब्राह्मणत्वादिवर्णस्तु स्मृतिलक्षणः इति । यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृतिग्रहणा भवन्ति । न तथा ब्राह्मणत्वादयो वर्णा निसर्गजा आकृतिग्रहणा भवन्ति । अतो ब्राह्मणत्वादयो वर्णास्तु सामाजिकानां ऐहिकाभ्युदयकार्यव्यवहारसौकर्याध्यात्माद्युन्नतिसिद्धयर्थाः पूर्वं गुणकर्मानुसारतः प्राक्कालिकसामाजिकैः कल्पिताः । तदेतत् ऐतरेयब्राह्मणेनापि समाम्नायते--'देवविशः कल्पयितव्या इत्याहुः, ताः कल्प्यमाना अनुमनुष्यविशः कल्प्यन्ते' इति ( ऐ० ब्रा० पं० १ अ० २ खं० ३ ) अयमर्थः—विशः=ब्राह्मणादयः प्रजाः । सन्ति हि देवेष्वपि तत्तद्गुणकर्मभिः कल्पिता ब्राह्मणादयो वर्णविशेषाः । अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ 'अग्ने ! महां असि ब्राह्मणः' 'ब्रह्म वै देवानां बृहस्पतिः' इति श्रुतेः । इन्द्र-रुद्र-यम-सोम-प्रभृतयो देवक्षत्रियाः, वसु-मरुत्-विश्वेदेवा आदयो देववैश्याः । पूषप्रभृतयः शूद्रदेवाः । कल्प्यमानास्ताः देवविशोऽनुसृत्य, मनुष्यविशः=ब्राह्मणादयो मनुजप्रजा अपि तत्तद्गुणकर्मभिः कल्प्यन्ते इत्यर्थः । अतः—'वेदस्मृति-पुराणेषु वर्णोत्कर्षापकर्षयोः । सिद्धान्तः ऐकमत्येन स्वीकृतो दृश्यते; स च ।। कर्मणा वर्णसंस्थायामेव संगच्छतेऽन्यथा । वर्णत्वे जन्मनः सिद्धे न स्यात्तत्परिवर्तनम् ।। विना वर्णपरावृत्ति तदुत्कर्षो न सेत्स्यति । नापकर्षश्च तस्मात्सा वर्णरूपा न जन्मना ।। मनुष्यत्वादिरूपा तु गोत्वाश्वत्वादिवद् भवेत् । जन्मनैवेति पार्थक्यं जातिवर्णस्वरूपयोः ।। ( मा० भा० ) इति ।

सति चैवं ब्राह्मणत्वादिवर्णव्यवहारेषु क्वचित् जातिशब्दप्रयोगस्तयोरपृथक्त्वभ्रान्त्यैव वेदितव्यः। अत एव ब्राह्मण-क्षत्रियप्रभृतिशब्दाश्च तत्तत्कर्मबोधकगुणशब्दाः परिवर्तनशील-वर्णवाचकाः एव सन्ति, न जातिशब्दाः। न हि तेषां ब्राह्मणादीनां वर्णत्वज्ञापकगुणशब्दत्वाभावे व्याकरणमहाभाष्य-कृता भगवता पतञ्जलिना—'सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते, ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति' ( अष्टा० ५।१।११५ ) इत्यभिधातुं शक्यते। जात्यन्तरे प्रयुज्यमानत्वाच्च। यदि ह्येते खलु जातिशब्दा विद्येरन् न गुणशब्दाः, तदा न जातु जात्यन्तरे प्रयुज्येरन्। न ह्यश्वशब्दो गवि, गोशब्दश्चाश्वे कदाचित्प्रयुज्यते। प्रयुज्यन्ते चैते जात्यन्तरेऽपि 'ब्रह्म वा अजः' ( शत० ६।४।४।१५ ) 'क्षत्रं वा अश्वः' ( श० १३।२।२।१७ ) 'वैश्यं च शूद्रं चानु रासभः' ( श० ६।४।४।१२ ) 'ब्रह्म वै पलाशः' ( श० १।३।६।१९ ) 'क्षत्रं वा एतदोषधीनां यद्दूर्वा।' ( ऐ० ८।२।४ ) इति। तस्मान्नूनमेते ब्राह्मणादयो वर्णत्वज्ञापकाः गुणशब्दाः न तु जातिशब्दाः इति विज्ञायते। तथा च गुणोत्कर्षापकर्षाभ्यामिहैव जन्मनि तेषां ब्राह्मणादि-वर्णानां परिवर्तनमपि युक्तमिति निश्चेतव्यम्।

अत एव 'अनयैव च दिशा ब्राह्मणत्वादिजातिरपि निवारिता भवति, न हि नानास्त्रीपुरुषव्यक्तिषु मनुष्यत्वादर्थान्तर-भूतमेकं जात्याकारमात्मसात्कुर्वन्ती मतिराविर्भवति कस्यचित्, न हि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकं जात्याकारमतिचिरमनुसंदधतोऽपि विचक्षणाः बुध्यन्ते' इत्यादि प्रकरणपञ्चिकायां जातिनिर्णयाख्ये तृतीयप्रकरणे द्रष्टव्यम्।

अत एव भविष्यपुराणे शतार्द्धसाहस्त्र्यां संहितायां ब्राह्मे पर्वणि षष्ठीकल्पे कार्तिकेयवर्णने जातिवर्णनाध्यायेऽपीदमुक्तम्— 'गोवर्गमध्यञ्च गतो यथाऽश्वो, निर्धार्यते ज्ञैः सुविचक्षणत्वात् । मनुष्यभावादविशिष्यमाणः, तद्वद् द्विजः शूद्रगणान्न भिन्नः । मनुष्यजातेर्न परो विशेषो यः कल्प्यते सर्वनरानुयायी । संस्कार-युक्ता हि क्रिया विशिष्टा, द्विजन्मनां शूद्रविवेकहेतुः ॥ (अ० ४७।२०-२१) इति । अर्थात् ब्राह्मणादिवर्णभेदकाः गुणकर्मा-ण्येव, न जात्यादिकम् ।

अत एव-'एकपित्रोः प्रजातानामेकजातिमतां नृणां । ज्योतिः-शास्त्रानुसाराच्च श्रूयते भिन्नवर्णता ॥ अन्नप्राशनसंस्कारे शिशोश्चेष्टापरीक्षया । तद्वृत्तिनिर्णयः प्रोक्तः, तद्वर्णप्रति-पत्तये ॥ 'कृतप्राशनमुत्संगाद् धात्री बालं समुत्सृजेत् । कार्यं तस्य परिज्ञानं जीविकाया अनन्तरम् ॥ देवताऽग्रेऽथ विन्यस्य शिल्पभाण्डानि सर्वशः । शास्त्राणि चैव शस्त्राणि, ततः पश्येत्तु लक्षणम् ॥ प्रथमं यत्स्पृशेद् बालो रिङ्गमाणः स्वयं तदा । जीविका तस्य बालस्य तेनैव तु भविष्यति ॥' (पारस्करगृह्य-सूत्रस्य कां० १ कं० १९। गदाधरभाष्ये धृता इमाः कारिकाः) ईदृग्वृत्तिपरीक्षाया उपयोगः प्रयोजनं । परिवर्तनशीलश्च वर्णस्तत् कर्मणा कृतः ॥ इति ।

## गुणकर्मादिपरिवर्तनेन वर्णपरिवर्तनम्

अत एव तत्तद्गुणकर्मोत्कर्षेण तत्तद्वर्णोत्कर्षोऽपि आपस्त-म्बधर्मसूत्रे इत्थं प्रतिपादितो वर्णपरिवर्तनमेव ज्ञापयति । यथाहि—'धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते, जाति-परिवृत्तौ, अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ।' (प्र० २ कं ११ सू० १०-११) इति । अतो

'नरो वर्णपरावृत्तौ, वर्णमापद्यतेऽपरं । जीवन्नेति सिद्धान्तः आप-स्तम्बादिभिः स्मृतः ।।' अत्र कश्चित् जातिपरिवृत्तौ' इत्यस्य 'जन्मपरावृत्तौ' व्याख्यानं करोति, तत्तुच्छम् । 'वर्णमापद्यते' इति वर्तमानक्रियाबोधकवाक्यविरोधात् । अतो जीवतामेव नृणां वर्णान्तरप्राप्तिर्विनिश्चीयते । अतः 'जातिपरावृत्तौ' 'इत्यस्य सात्त्विकराजसतामसजीवनपरिवर्तने सति' इत्यर्थ एव साधी-यान् । तस्मात् शमदमादिधर्मेण राजसतामसजीवनस्य सात्त्विक-जीवनरूपेण परिवर्तने कृते सति जीवन्नेव मानवोऽवरवर्णजः उच्चवर्णः स्यादित्यर्थ एवात्र प्रतिपादितोऽवगम्यते । एवं राज-सतामसजीवनरूपेण सात्त्विकजीवनस्य परिवर्तने सति काम-क्रोधाद्यधर्मेण उच्चवर्णो मानवोऽवरवर्णजो भवतीत्यपि बोध्यम् । अत एव महाभारतस्य शान्तिपर्वण्यपि एतदभिहितम् 'वर्णोत्क-र्षमवाप्नोति नरः पुण्येन कर्मणा ।' 'उत्कर्षार्थं प्रयतेत नरः पुण्येन कर्मणा । वर्णेभ्यो हि परिभ्रष्टो न वै सम्मानमर्हति ।।' (अ० २६१ । ३-५) इति । 'ईदृग्वर्णान्तरापत्तौ नृणामेकशरी-रतः । धर्मशास्त्रप्रमाणानि सन्ति भूयांसि सर्वथा ।।' इति ।

## मतङ्ग-महर्षि-कथा

प्रसिद्धयशा मतङ्गो महर्षिः शूद्रात् नापितात् ब्राह्मण्यां जातोऽभूत् । तेन किल गर्दभीवाक्यात् स्वमातृगुप्तव्यभिचार-स्वनिष्ठाधमतमत्ववृत्तान्तोऽवगतः । अत एव तस्य हृदये महान् पश्चात्तापो जातः । तेन स्वनिष्ठदोषनिवृत्तये ब्राह्मण्यलाभाय च महत् तपः समाचरितम् । तपःप्रभावेण सात्त्विकशमदम-दयाक्षमादिगुणकर्मधारणेन च स जीवन्नेव महान् महर्षिः कुल-पतिश्चाभवत् । पम्पासरोवरतटे येन विशाल आश्रमः स्थापितः, वाल्मीकिरामायणादौ यस्य विशदवर्णनमवगतं भवति । यत्र

किल भूयांसस्तच्छिष्या महर्षयो ब्राह्मणाः निवासं चक्रुः । प्रसिद्धा तापसी श्रीरामभक्ता शबर्यपि यस्य शिष्या आसीत् । यस्य जन्मकथा महाभारतस्यानुशासनपर्वणीत्थमवगम्यते । यथाहि—

'अत्राप्युदाहरन्तीममितिहासं पुरातनम् । मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर !।। द्विजातेः(ब्राह्मणस्य)कस्यचित् तात ! तुल्यवर्णः सुतस्त्वभूत् । मतङ्गो नाम नाम्ना वै, सर्वैः समुदितो गुणैः ।।‡ स यज्ञकारः कौन्तेय ! पित्रोत्सृष्टः (पित्रा ब्राह्मणेन तत्र गमनाय प्रयोजितः) परंतप !। प्रायाद् गर्दभयुक्तेन रथेनाप्याशुगामिना ।। स बालं गर्दभं राजन् ! वहन्तं मातु- ( गर्दभ्याः ) रन्तिके । निरविध्यत् प्रतोदेन† नासिकायां पुनः पुनः ।। तत्र तीव्रं व्रणं दृष्टवा, गर्दभी पुत्रगृद्धिनी । उवाच मा शुचः पुत्र ! चाण्डालस्त्वधितिष्ठति ।। ब्राह्मणे दारुणं (क्रौर्यं) नास्ति, मैत्रो (सर्वहितकर्ता) ब्राह्मण उच्यते । आचार्यः सर्व-

---

‡ब्राह्मणोचितसंस्कारप्रभावेण नीचवर्णजन्योऽपि ब्राह्मण-समानवर्णवान् निखिलगुणसम्पन्नश्चाभूत् । समुदितः=संयुक्त इत्यर्थः । कस्यचित् यजमानस्य गृहे यज्ञकरणाय रथेन गतवान्, अतः स यज्ञकारः=यज्ञसंपादनकर्ता आसीत् ।

†प्रतोदेन=ताडनदण्डेन व्यथाजनकेन तोत्रवेत्रेण, निर-विध्यत्=वेधनं विक्षतमकरोत् । पुत्रगृद्धिनी=पुत्रशुभाकांक्षिणी । अधितिष्ठति=ब्राह्मणो नहि, चाण्डालस्तवोपरि अधिरुह्य गच्छति । पापप्रकृतिः=स्वभावतः पापात्मा, स्वयोनिं=स्व-चण्डालयोनिं, शूद्रात् ब्राह्मण्यां जातस्य चाण्डालत्वात् । मानयति=ज्ञापयति । भावः=नीचस्वभावः, भावं=मनसो नीच-भावं नियच्छति=नियन्त्रणं करोति । दारुणं=व्यथाकरं, येन= कर्मणा, तत्त्वेन=वस्तुत्वेन । अनशत्=नष्टमभूत् ।

भूतानां शास्ता ( हितोपदेष्टा ) किं प्रहरिष्यति ?।। अयं तु पापप्रकृतिर्बाले न कुरुते दयाम् । स्वयोनिं मानयत्येष भावो भावं नियच्छति ।। एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः । अवतीर्य रथात् तूर्णं रासभीं ( गर्दभीं ) प्रत्यभाषत ।। ब्रूहि रासभि ! कल्याणि !, माता मे येन दूषिता । कथं मां वेत्सि चण्डालं क्षिप्रं रासभि ! शंस ( कथय ) मे ।। कथं मां वेत्सि चण्डालं ब्राह्मण्यं येन नश्यते । तत्त्वेनैतन्महाप्राज्ञे ! ब्रूहि सर्वमशेषतः ।।

गर्दभ्युवाच–'ब्राह्मण्यां वृषलेन ( शूद्रेण ) त्वं, मत्तायां (यौवनमदेनोन्मत्तायां) नापितेन ह । जातस्त्वमसि चाण्डालो ब्राह्मण्यं तेन तेऽनशत् ।। एवमुक्तो मतङ्गस्तु प्रतियायात् गृहं प्रति । तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् ।। मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि । कस्मात् प्रतिनिवृत्तोऽसि, कच्चित् (इष्टप्रश्ने) न कुशलं तव ।। मतङ्ग उवाच-अन्त्ययोनिरयोनि र्वा कथं स कुशली भवेत् । कुशलं तु कुतस्तस्य यस्येयं× जननी पितः !।। ब्राह्मण्यां वृषलाज्जातं पितर्वेदयतीव माम् । अमानुषी गर्दभीयं तस्मात् तप्स्ये तपो महत् ।। एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः । ततो गत्वा महारण्यमतपत् सुमहत् तपः ।।' (म० भा० अनु० प० अ० २८ । सप्तमश्लोकादारभ्य द्वाविंशतिश्लोकपर्यन्तम्)

'इत्येवं दारुणं कर्म, मैत्रत्वविरहादि च । मतङ्गे ब्राह्मणत्वस्याभावहेतुः प्रदर्शितः ।। पश्चात्तु तपसा सोऽपि ब्राह्मण्यं

×यस्य=पुत्रस्य कृते इयं=ईदृशी–व्यभिचारदुष्टा–जननी=नीचवर्णसंसर्गात् मां पुत्रं प्रसवित्री मिलिताऽभूत्, स कथं कुशली स्यात् ?। वेदयतीव=बोधयतीव । अन्त्ययोनिः=अन्त्यजयोनिः ।

समुपागमत् । जीवन्नेवेति कर्मतो गुणतश्च व्यवस्थितम् ।। इति । पश्चात् स मतङ्गो महर्षिः समागतं देवराजं शक्रं प्रतीत्थं प्रोवाच—'एकारामो× ह्यहं शक्र ! निर्द्वन्द्वो निष्परिग्रहः । अहिंसादममास्थाय कथं नार्हामि विप्रताम् ।।' (म० भा० अनु० प० २८।१७) इति । ततः प्रसन्नेन शक्रेण कीर्तिवरः तस्मै प्रदत्तः—'कीर्तिश्च तेऽतुला वत्स ! त्रिषु लोकेषु यास्यति' (अनु० २८।२४) इति ।

यस्य महती कीर्तिः—वाल्मीकिरामायणेऽध्यात्मरामायणे चेत्थं वर्णिता—'पम्पायास्तीरमाश्रित्य पश्चिमम् । आश्रमस्थानमतुलम् ।' ऋषेस्तस्य मतङ्गस्य विधानात् ( प्रभावात् ) तच्च काननम् । मतङ्गवनमित्येव विश्रुतं रघुनन्दन! ।' मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः ।' ( वा० रा० अरण्यकाण्डे सर्ग ७३।२८-२९-२३ ) इत्येवं तापसी शबरी भगवन्तं श्रीरामं प्रत्युवाच । 'इह ते भावितात्मानो गुरवो मे महाद्युते! ।। जुहवांचक्रिरे नीडं मन्त्रवन्मन्त्रपूजितम् ।।' ( ७४।२२ ) मन्त्रस्य=गायत्र्या जपेन पूजितं=अतिशुद्धं, नीडं=देहपञ्जरम् । तद्धोममन्त्रवत्—ब्रह्माग्नौ, जुहवांचक्रिरे=हुतवन्तः । 'तेषां तपःप्रभावेण पश्याद्यापि रघूत्तम! । द्योतयन्ती दिशः सर्वाः श्रिया वेद्यतुलप्रभा ।।' (७४।२४) 'तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् । मुनिनामाश्रमो येषामहं च परिचारिणी ।।' (७४। २९) तेषां मदाचार्याणां मतङ्गमहर्षीणां प्रभावेणेयं वेदिस्तत्पूजाकाल इवाद्यापि सर्वा दिशो द्योतयन्त्यतुलप्रभा दृश्यते,

---

×एकारामः=एकान्ते शान्त्याऽऽनन्देन च निवसनशीलः । विप्रतां=ब्राह्मण्यं, कथं प्राप्तुं न शक्नोमि ?=अर्थात् शक्नोम्येवेत्यर्थः ।

पश्य। आश्रमः=अयमाश्रमः, भावितात्मनां=सदाऽनुसंहित-परमात्मनां। 'अत्राश्रमे रघुश्रेष्ठ! गुरवो मे महर्षयः। स्थिताः शुश्रूषणं तेषां कुर्वती समुपस्थिता॥ बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम्। गमिष्यन्तोऽब्रुवन्मां त्वं वसात्रैव समाहिता॥ (अ० रा० अरण्यकाण्डे स० १०।११-१२) इति 'इत्येवमुक्ता जटिला चीरकृष्णाजिनाम्बरा। अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने॥ ज्वलत्पावकसंकाशा स्वर्गमेव जगाम ह॥' (वा० रा० अ० ७४।३२-३३) इति स्वर्गं=ब्रह्मलोकं शबरी जगामेत्यर्थः।

एतेनेदमवगम्यते- पुरातनकाले भगवदवतारभूतश्रीरामस्य त्रेतायुगसमयेऽपि याज्ञिकसंस्कृतब्राह्मणादिश्रेष्ठकुलेऽपि गुप्तव्यभिचारोऽवर्तत। तदन्येषां तु का कथा वक्तव्या भवेत्। सति चैवं तत्तज्जनपदप्रशासकानां राज्ञामिदं वचोऽपि—'न मे स्तेनो जनपदे न कदर्यो न मद्यपो न स्वैरः स्वैरिणी कुतः।' (छां० ५।११।५) इति चिन्त्यं स्यात्। गर्दभीवाक्यात् तेन मतङ्गेन तया दारुणकर्मावलोकनादनुमितं स्वमातृनिष्ठकलंकमवगतम्। अन्यथा नापितात् शूद्रात् ब्राह्मण्यां जातस्य स्वस्याज्ञातचाण्डालत्वं कथमवगतं स्यात्?। तत्पित्रा ब्राह्मणेन तु सर्वथैव न ज्ञातम्। स तु मतंगस्य स्ववीर्यजन्यपुत्रत्वं मत्वा ब्राह्मणस्य यज्ञोपवीतादिनिखिलसंस्कारान् अकरोत्। तेन वेदाध्ययनादिना तस्य यज्ञकर्मनैपुण्यमपि सम्पादितम्। एवं दुर्वारे मकरध्वजे सति, चञ्चलतममदोन्मत्त-कामिनीमूले च कुले सति, को ज्ञातुं यथावत् प्रभवेत्? कस्य कः पुत्रादिसन्तानो विशुद्धो वाऽविशुद्धो वा, ब्राह्मणो वाऽब्राह्मणो वेति। अत एव गोपथ-ब्राह्मणेऽपीदमभिहितमपि—'न च एतद् विद्मो, वयं ब्राह्मणाः

वा स्मः अब्राह्मणाः वा ।' ( गो० ब्रा० पू० ५।२१ ) जन्मतो जात्या वेति शेषः । तत्तद्गुणकर्मादितस्तु ब्राह्मणत्वादेर्निर्णयं कर्तुं शक्यत एवेति ।

## वीतहव्यस्य राज्ञो वृत्तान्तः

महाभारतस्यानुशासनिके पर्वणि युधिष्ठिरप्रश्नभीष्मोत्तराभ्यां वीतहव्यस्य राज्ञो वृत्तान्त इत्थमवगम्यते । यथा हि युधिष्ठिर उवाच–'वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः । तदेव तावद् गांगेय! श्रोतुमिच्छाम्यहं विभो! ।। स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तमः । वरेण तपसा वापि तन्मे व्याख्यातुमर्हसि ।।' ( अ० ३०।३-४ ) इति । भीष्म उवाच–'शृणु राजन्! यथा राजा वीतहव्यो महायशाः । राजर्षिः दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ।।' ( ३०।५ ) इति । प्रथमं तावत् भीष्मेण तस्य वंशक्रमो निरूपितस्तत्र । पश्चात् वीतहव्यस्य बलिभिः पुत्रैः दिवोदासस्य काशीनरेशस्य संपूर्णो वंशो युद्धे प्रणाशितः । भारद्वाजस्येष्टिप्रयोगेण तस्य दिवोदासस्य गृहे प्रतर्दननामा तनयो जज्ञे इति वर्णितम् । तेन महाबलवता प्रतर्दनेन तस्य वीतहव्यस्य सर्वेऽपि पुत्रा हताः,सर्वं राज्यं च विजितम्। पश्चात्–'हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ । प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ।।४४।। ययौ भृगुं च शरणं, वीतहव्यो नराधिपः । अभयं च ददौ तस्मै, राज्ञे राजन् ! भृगुस्तदा ।।४५।। अथानुपदमेवाशु, तत्रागच्छत्प्रतर्दनः । स प्राप्य चाश्रमपदं, दिवोदासात्मजोऽब्रवीत् ।।४६।। भो भोः! केऽत्राश्रमे सन्ति, भृगोः शिष्याः ! महात्मनः! । द्रष्टुमिच्छे मुनिमहं, तस्याचक्षत मामिति ।।४७।। स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा । पूजयामास च ततो विधिना नृपसत्तमम् ।।४८।।

उवाच चैनं राजेन्द्र ! किं कार्यं ब्रूहि पार्थिव ! । स चोवाच नृपस्तस्मै, यदागमनकारणम् ।।४६।। राजोवाच-अयं ब्रह्मन् ! इतो राजा वीतहव्यो विसर्ज्यताम् । तस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन् ! वंशः प्रणाशितः ।।५०।। उत्सादितश्च विषयः (देशः) काशीनां रत्नसंचयः । एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया ।।५१।। अस्येदानीं वधादद्य, भविष्याम्यनृणः पितुः । तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः ।।५२।। नेहास्ति क्षत्रियः कश्चित् सर्वे हीमे द्विजातयः ( ब्राह्मणाः ) । एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं ( न तु मिथ्या ) प्रतर्दनः ।।५३।। पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् । एवमप्यस्मि भगवन्! कृतकृत्यो न संशयः ।।५४।। य एष राजवीर्येण स्वजातिं ( स्ववर्णं-क्षत्रियत्वं ) त्याजितो मया ( प्रतर्दनेन ) । अनुजानीहि ( आज्ञां विधेहि ) मां ब्रह्मन् ! ध्यायस्व च शिवेन माम् ( मम कल्याणं त्वं चिन्तय ) ।।५५।। त्याजितो हि मया जातिमेव राजा भृगूद्वह! । ततस्तेना-( भृगुणा ) ऽभ्यनुज्ञातो ययौ राजा प्रतर्दनः ।।५६।। यथागतं महाराजमुक्त्वा विषमिवोरगः । भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ।।५७।। वीतहव्यो महाराज ! ब्रह्मवादित्वमेव च (गतः=प्राप्तः) ।।५८।। इति । 'एवं विप्रत्वमगमद् वीतहव्यो नराधिपः । भृगोः प्रसादात् राजेन्द्र ! क्षत्रियः क्षत्रियर्षभ ! ( युधिष्ठिर ! ) ।। ( म० भा० अनु० अ० ३०।६६ ) इति । अत्रेदं प्रत्येतव्यम्—मृत्युभयात् वीतहव्यो राजा भृगोर्ब्रह्मर्षेः शरणं गत्वा तत्कृपां सम्पादितवान् । अतस्तेन तत्कृपावरेणैव 'न तु महता तपसा विश्वामित्रवत्' क्षत्रियवर्णतां हित्वा विप्रवर्णता संपादिता । तच्छत्रुः राजा प्रतर्दनोऽपि 'अयं मम ( भृगोः ) प्रसादात्

विप्रोऽजायत, ततः सर्वथा क्षत्रियवर्णत्वमपगतमेव' इति भृगो-र्वचनं सत्यमेव, न त्वनृतं, न तु वञ्चकञ्च मेने। अनेन वीत-हव्योपाख्यानेनास्मिन्नेव जन्मनि तत्तद्गुणकर्मपरिवर्तनेन वर्ण-परिवर्तनं स्पष्टतोऽवगम्यते, तयोर्द्वयोर्भृगुप्रतर्दनयोर्ब्रह्मक्षत्रयोः औदार्यस्य पराकाष्ठापि च। प्रतर्दनस्य च स्वपराक्रमप्रयोजित-शत्रुनिष्ठक्षत्रियत्ववर्णनिरासात् संजातः सन्तोषोऽपि च।

एवं वीतहव्यस्य पुत्रो गृत्समदोऽपि विप्रर्षिरभवत्। तस्य पुत्रः सुतेजाऽपि ब्राह्मणोऽभूत्। एवं तस्य समग्रवंशपरंपरायां स्थिताः वर्चा-विहव्य-वितत्य-सत्य सन्त श्रवा-तम-प्रकाश-वागिन्द्र-प्रमति-प्रभृतयः सर्वेऽपि वेदवेदांगपारगा विद्वांसो विप्राः अभूवन्। इति महाभारतानुशासनपर्वस्थितवचनैरेवावगम्यते। तद्यथा—'तस्य (वीतहव्यस्य) गृत्समदः पुत्रो रूपेणेन्द्र इवापरः। ऋग्वेदे वर्तते चाग्र्या (श्रेष्ठा) श्रुतिर्यस्य महात्मनः॥' (अ० ३०।५६) 'यत्र गृत्समदो राजन्! ब्राह्मणैः स महीयते। स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्॥६०॥ पुत्रो गृत्समदस्यापि सुतेजा अभवद् द्विजः (ब्राह्मणः)। इति। तस्यैव वंशे 'घृताच्यां (अप्सरसि) तस्य (प्रमितेः) पुत्रस्तु रुरुर्नामोदपद्यत॥६४॥ प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत। शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः॥६५॥ शौनकस्य तु प्रसिद्धमेव ब्रह्मर्षित्वम्।

## वर्णपरिवर्तने श्रीमद्भागवतस्यापि सन्त्यनेकोदाहरणानि

यथाहि—नवमस्कन्धे—'श्रीशुक उवाच-पुरोः (क्षत्रियस्य) वंशं प्रवक्ष्यामि, यत्र जातोऽसि भारत! (हे परीक्षित्)॥' 'यत्र (क्षत्रियवंशे) राजर्षयो वंश्याः, ब्रह्मवंश्याश्च जज्ञिरे। (प्रादुर्भूताः) (भा० ९।२०।१) इति। ब्रह्म=ब्राह्मणाः वंश्ये येषां ते ब्रह्मवंश्याः। इति। एवं—'रथीतरस्याप्रजस्य भार्यायां

तन्तवेऽर्थितः । अंगिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ।। एते क्षेत्रे प्रसूता वै पुनस्त्वांगिरसाः स्मृताः । रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ।।' (भा० ६।६।२-३) इति । रथीतरः= क्षत्रियस्य राज्ञः प्रसिद्धस्याम्बरीषस्य प्रपौत्रः । तन्तवे=प्रजातन्तु-विस्ताराय अर्थितः=प्रार्थितः, अंगिराः=ब्रह्मर्षिः । अनेन नियोगधर्मोऽभिलक्ष्यते । ये अंगिरसा जनिता एते रथीतरस्य क्षेत्रे भार्यायां क्षत्रियाण्यां प्रसूतत्वेन रथीतरगोत्राः सन्तोऽङ्गिरसो वीर्येण प्रसूतत्वादांगिरसाश्च । पुनरपि रथीतराणामन्येषां जातानां प्रवराः-मुख्याः स्मृताः । यतः क्षेत्रोपेता द्विजातयः= ब्राह्मणाः, यद्वा द्वे जाती ब्रह्मक्षत्रे येषां ते, क्षत्रधर्मयुता ब्राह्मणा बभूवुः । एवं 'गर्गाच्छिनिस्ततो गार्ग्यः, क्षत्राद्ब्रह्म ह्यवर्तत । दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः ।। पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ।' (भा० ६।२१।१६-२०) इति । गर्गः= रन्तिदेवस्य क्षत्रियस्य राज्ञः वंशे प्रसूतः । तस्मात् शिनिः पुत्रः, तस्मात् गार्ग्यः पुत्रो, ब्रह्म=ब्राह्मणोऽभूत् । क्षत्रात्=क्षत्रियात्, ब्रह्म=ब्राह्मणकुलं, अवर्तत=प्रवृत्तमभूदित्यर्थः । गार्ग्यस्य पुत्रः-दुरितक्षयः, तस्य त्रय्यारुणिः, कविः, पुष्करारुणिश्चेति त्रयः पुत्राः ये सन्ति, ते ब्राह्मणगतिं=ब्राह्मणवर्णत्वं गताः प्राप्ताः अभूवन् । एवं-'अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः । अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ।। अजमीढाद् बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।' (भा० ६।२१।२१-२२) इति । अजमीढस्य वंश्याः (वंशे भवाः) प्रियमेधादयः केचिद् ब्राह्मणा बभूवुः, बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम् (श्रीधरी-यव्याख्यानम्) द्विजाः=ब्राह्मणाः इत्यर्थः । एवं 'मुद्गलाद्ब्रह्म निर्वृत्तं, गोत्रं मौद्गल्यसंज्ञितम् ।' (भा० ६।२१।३३) इति ।

मुद्गलात्=क्षत्रियात्, ब्रह्म=ब्राह्मणकुलं, निर्वृत्तं=प्रसूतं-समुत्पन्नमभूत् । मौद्गल्यगोत्रान्विताः ब्राह्मणा अभवन्निति यावत् । एवं 'धृष्टात् धार्ष्टमभूत् क्षत्रं ब्रह्मभूयं गतं क्षितौ ।' ( भा० ९।२।१७ ) इति । ब्रह्मभूयं=ब्राह्मणत्वं ( श्रीधरी ) क्षितौ=भूलोके, क्षत्रं ब्राह्मणवर्णत्वेन प्रसिद्धमभूदित्यर्थः । 'रंभस्य रभसः पुत्रो गंभीरश्चाक्रियस्ततः ।। तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ।' (भा० ९।१७।१०-११) तस्य=अक्रियस्य क्षेत्रे=भार्यायां, ब्रह्म=ब्राह्मणः, जज्ञे=प्रादुर्भूतः इत्यर्थः । 'ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः । कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ।। ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप !। नाभागोदिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ।।' (भा० ९।२।२१-२२-२३) इति । 'शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह । यो वा अङ्गिरसां सत्रे द्वितीयमह ऊचिवान् ।।' ( भा० ९।३।१ ) इति । ब्रह्मिष्ठः=वेदार्थतत्त्वज्ञः, द्वितीयमहः=द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवान्=उवाच । 'गृत्समदात् (क्षत्रियाद्) अभूत् । शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः । · · · धन्वंतरिर्दीर्घतम आयुर्वेदप्रवर्तकः ।। (भा० ९।१७।३-४) बह्वृचां=ऋग्वेदिनां मध्ये प्रवरः=मुख्यो मुनिः । इत्यादीनि श्रीमद्भागवतेऽपि पुराणमूर्धन्ये तत्तद्गुणकर्मादिपरिवर्तनेन तत्तद्वर्णपरिवर्तने भूयांसि वचनानि प्रमाणभूतानि सन्तीति ज्ञेयम् ।

## विविधपुराणादीनामुदाहरणानि

मत्स्यपुराणे तावत्—'ततस्तु वितथो नाम भरद्वाजो नृपोऽभवत् । तस्मादपि भरद्वाजात् ब्राह्मणाः क्षत्रिया भुवि । द्व्यामुष्यायणकौलीनाः× स्मृतास्ते द्विविधेन च ।। (वंशेन संयुक्ताः)

---

×द्वयोरमुयोः कुलयोः प्रभवाः पुत्रा इत्यर्थः ।

गर्गस्य चैव दायादः (दायं विभजनीयधनमादत्ते) शिबिर्विद्वानजायत। स्मृताः शैब्यास्ततो गर्गाः क्षत्रोपेता द्विजातयः (ब्राह्मणाः)।। आहार्यतनयश्चैव धीमानासीदुरुक्षवः। तस्य भार्या विशाला तु सुषुवे पुत्रकत्रयम्।। उरुक्षवाः स्मृता ह्येते सर्वे ब्राह्मणतां गताः। काव्यानां तु वरा ह्येते त्रयः प्रोक्ता महर्षयः।। गर्गाः संकृतयः काव्याः क्षत्रोपेता द्विजातयः।' 'आजमीढस्य केशिन्यां (भार्यायां) कण्वः समभवत्किल। मेधातिथिः सुतस्तस्य तस्मात्काण्वायनाः द्विजाः (ब्राह्मणाः)।। मुद्गलस्यापि मौद्गल्याः क्षत्रोपेता द्विजातयः। एते ह्याङ्गिरसः पक्षं संश्रिताः काण्वमुद्गलाः।। ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः। क्षेमकं प्राप्य राजानं संस्थास्यति कलौ युगे।।' (म० पु० अ० ४९ तथा ५०) इति। एवं वायुपुराणेऽपि—'अम्बरीषस्तु नाभागिर्विरूपस्तस्य चात्मजः। पृषदश्वो विरूपस्य, तस्य पुत्रो रथीतरः।। एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः। रथीतराणां प्रवराः क्षात्रोपेता द्विजातयः।।' (वायुपु० ८८।६-७) 'श्रूयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः।' विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः।। कपेश्च पुरुकुत्सश्च सत्यश्चानूहवानृथुः। आर्ष्टिषेणोऽजमीढश्च भागाऽन्योऽन्यस्तथैव च।। कक्षीवश्चैव शिजयस्तथाऽन्ये च महारथाः। रथीतरश्च रुन्दश्च विष्णुवृद्धादयो नृपाः।। क्षात्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः।।' (वा० पु० ९१।१०५-१८) 'पुत्रो गृत्समदस्यापि शुनको यस्य शौनकाः। ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च। एतस्य वंशे संभूताः विचित्रैः कर्मभिर्द्विजाः। शलात्मजो ह्यार्ष्टिषेणश्चरन्तस्तस्य चात्मजः। शौनकाश्चार्ष्टिषेणाश्च क्षात्रोपेता द्विजातयः।' (वायु पु० अ० ९२।

श्लो० ४-६। एवं हरिवंशपुराणेऽपि च १।२६।७-८) इति।

एवं ब्रह्मपुराणे हरिवंशपुराणेऽपि च—'नाभागधृष्टपुत्राश्च क्षत्रियाः वैश्यतां गताः। नाभागरिष्टपुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ॥ पृषध्रो हिंसयित्वा तु गुरोर्गां द्विजसत्तमाः!। शापाच्छूद्रत्वमापन्नः।'(ब्रह्म पु० अ० ७।१३-१४-१५) इमे श्लोकाः हरिवंशेऽपि पर्व० १ अ० १० श्लो० ३०। तथा अ० ११ श्लो० ६-१०) इत्यत्र समुपलभ्यन्ते। 'महायोगी स तु बलिर्बभूव नृपतिः पुरा। पुत्रानुत्पादयामास पञ्च वंशकरान्भुवि॥ अङ्गः प्रथमतो जज्ञे, बङ्गः सुह्मस्तथैव च। पुण्ड्रः कलिंगश्च तथा बालेयं क्षत्रमुच्यते॥ बालेया ब्राह्मणाश्चैव तस्य वंशसमुद्भवाः। बलेश्च ब्रह्मणा दत्तो वरः प्रीतेन भो द्विजाः!॥ चतुरो नियतान्वर्णांस्त्वं च स्थापयितेति च: इत्युक्तो विभुना राजा बलिः शान्ति परां ययौ॥ तस्य ते तनयाः सर्वे क्षेत्रजाः मुनिपुङ्गवाः। संभूता दीर्घतमसो सुदेष्णायां (राज्ञ्यां) महौजसः॥(ब्रह्म पु० अ० १३। तथा हरिवंशे पर्व० १ अ० ३१) 'विश्रुताः कौशिकाः विप्राः, तथाऽन्ये सैन्धवायनाः। ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः॥ पौरवस्य मुनिश्रेष्ठाः ब्रह्मर्षेः कौशिकस्य च। सम्बन्धोऽस्याथ वंशेऽस्मिन् ब्रह्मक्षत्रस्य विश्रुतः॥' ( ब्र० पु० अ० १३ ) 'पाणिनो बभ्रवश्चैव, पार्थिवा देवरातश्च शालङ्कायन-बाष्कलाः। शालावत्या हिरण्याक्षाः सांकृत्या गालवास्तथा। ऋष्यन्तरविवाह्याश्च,। पौरवस्य महाराज! ब्रह्मर्षेः कौशिकस्य च। सम्बन्धोऽप्यस्य वंशेऽस्मिन् ब्रह्मक्षत्रस्य विश्रुतः॥' (हरिवंशे-पर्व १ अ० २७। तथा अ० ३२)'पुत्रः प्रतिरथस्यापि कण्वः समभवन्नृपः। मेधातिथिः सुतस्तस्य यस्मात् काण्वायना द्विजाः॥' 'मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः। सर्व

एते महात्मानः क्षत्रोपेता द्विजातयः ॥' 'एते ह्याङ्गिरसः पक्षं संश्रिताः काण्वमौद्गलाः। मौद्गलस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः॥ मैत्रायणस्ततः सोमो मैत्रेयास्तु ततः स्मृताः। एते हि संश्रिताः पक्षं क्षत्रोपेतास्तु भार्गवाः (ब्राह्मणाः)॥ (हरिवंश पु० प० १ अ० १३)।

एवं विष्णुपुराणेऽपि—'पृषध्रस्तु शूद्रत्वमगमत्' 'नाभागो वैश्यतामगमत्' (वि० पु० ४।१।१७-१९) 'क्षत्रोपेता द्विजातयः' (वि० पु० ४।२।१० ) 'निःस्वाध्याय-वषट्कारानेतानन्यांश्च क्षत्रियांश्चकार' (वि० पु० ४।३।४८) 'अप्रतिरथस्य (क्षत्रियस्य) कण्वः पुत्रोऽभूत्, तस्यापि मेधातिथिः, यतः काण्वायना द्विजाः (ब्राह्मणाः) बभूवुः' (वि० पु० ४।१९।५-७) इति। (गरुड-पुराणे पूर्वखण्ड अ० १४२।४४)

भविष्यपुराणेऽपि च—'इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत्।' पञ्च पुत्राः ययातेश्च त्रयो म्लेच्छत्वमागताः। द्वौ तथाऽऽर्यत्वमापन्नौ यदुर्ज्येष्ठः पुरुर्लघुः॥' (भ० पु० १।२।४९-५०) इति।

एवं व्याकरणमहाभाष्येऽपि—भगवता पतञ्जलिना—तपसा विश्वामित्रेण न केवलं स्वनिष्ठं ब्राह्मण्यं सम्पादितमपि तु स्वपितुः गाधेः, स्वपितामहस्य कुशकस्य च ब्राह्मण्यं सम्पादितमित्युक्तम्। तद्यथा—'विश्वामित्रस्तपस्तेपे, नाऽनृषिः स्यामिति, तत्रभवान् ऋषिः सम्पन्नः, स पुनस्तपस्तेपे, नाऽनृषेः पुत्रः स्यामिति, तत्रभवान्गाधिरप्यृषिः सम्पन्नः, स पुनस्तपस्तेपे, नाऽनृषेः पौत्रः स्यामिति, तत्रभवान्कुशिकोऽपि ऋषिः सम्पन्नः इति' ( पा० म० पाणिनि सू० ४।१।१०४ ) इति। तथा च कौशिको विश्वामित्रो ब्रह्मर्षिः इति सिद्धयति। अनृषिः=ब्रह्म-

षिभिन्नः । ऋषिः=ब्राह्मणोत्तमो ब्रह्मर्षिः । एवं–'ऋग्वेदब्राह्मण-(ऐतरेय-ब्राह्मणस्य) स्यासीत् कर्ता यस्त्वैतरेयकः । दासीपुत्रः स विख्यातो ब्राह्मण्यं कर्मणा गतः ।।' तद्यथा–'एतद्ध स्म वै तद्विद्वानाह 'महिदास' ऐतरेयः' ( ऐ० आ० ८।१।२ छां० उ० ३।१६।७ ) 'महिदासो नामतः इतरायाः ( द्विजेभ्योऽन्यायाः शूद्रायाः ) अपत्यं ऐतरेय इति तत्रत्यं शाङ्करभाष्यम् ।

एभिर्वचनैरिदं स्पष्टतो विनिर्णीयते–'तत्तद्गुणकर्मादिपरिवर्तनेन तत्तद्ब्राह्मणत्वादिवर्णपरिवर्तनं भवत्येवेति ।' तस्मात् 'गुणकर्मपरावृत्या वर्णान्तरपरिग्रहे । पुराणादिषु भूयांसि सन्त्युदाहरणान्यपि ।। इति ।

## प्राक् व्याधकर्मणः पश्चात् यज्ञाचार्यस्योपाख्यानम्

भविष्यपुराणे प्रतिसर्गपर्वणि द्वि ीयखण्डे त्र्यधिकत्रिंशत्तमाध्याये तावत्तस्य कथेदृशी वर्णितोपलभ्यते । तद्यथा–'विक्रमादित्यराज्ये तु द्विजः ( ब्राह्मणः )कश्चिदभूद् भुवि । व्याधकर्मेति विख्यातो ब्राह्मण्यां शूद्रतोऽभवत् ।।× त्रिपाठिनो द्विजस्यैव, भार्या नाम्ना हि कामिनी । मैथुनेच्छावती नित्यं (सर्वदा) मदाघूर्णितलोचना ।। द्विजः सप्तशतीपाठे वृत्त्यर्थी कर्हिचिद् गतः । ग्रामे देवलके रम्ये, बहुवैश्यनिषेविते ।। तत्र मासो गतः कालो नाययौ स स्वमन्दिरे । तदा तु कामिनी दुष्टा, रूपयौवनसंयुता ।। दृष्ट्वा निषादं(व्याधं)सबलं, काष्ठभारोपजीवनं । तस्मै दत्वा पञ्च मुद्रा, बुभुजे कामपीडिता ।। तदा गर्भं दधौ सा च व्याधवीर्येण संञ्चितं । पुत्रोऽभूद् दशमासान्ते, जातकर्म पिताऽ (ब्राह्मणः) करोत् ।। द्वादशाब्दे गते काले स

---

×यदाह–याज्ञवल्क्यः–'ब्राह्मण्यां' शूद्राज्जातस्तु चाण्डालः' सर्वधर्मबहिष्कृतः । ( स्मृ० १।९३ ) इति ।

धूर्त्तो वेदवर्जितः । व्याधकर्मकरो नित्यं, व्याधकर्मा ह्यतोऽभवत् ।। निष्कासितौ द्विजेनैव, मातृपुत्रौ द्विजाधमौ । निषादस्य+ गृहे चोभौ, वने गत्वोषतुर्मुदा ।। प्रत्यहं (तया कामिन्या) जारभावेन बहुद्रव्यमुपार्जितम् । व्याधकर्मा तु चौर्येण पितृ - (निषाद) मातृप्रियङ्करः ।। एकदा दैवयोगेन शिवामन्दिरमाययौ । चौर-वृत्तिपरो धूर्त्तः (कस्याश्चित्) स्त्रिया भूषणमाहरत् ।। कैश्चि-ज्ज्ञातः स नो धूर्त्तो, बहुमायाविशारदः । कदाचित्प्राप्तवांस्तत्र द्विजं देवीपरायणम् ।। श्रुतमादिचरितं (सप्तशतीपुस्तकात्) हि, तेन शब्दप्रियेण वै । पाठपुण्यप्रभावेण धर्मबुद्धिस्ततोऽभवत् (सः व्याधकर्मा)। दत्त्वा चौर्यधनं सर्वं, तस्मै विप्राय पाठिने । शिष्यत्वमगमत्तस्याक्षरमैशं‡ जजाप ह ।। बीज (शिव) मन्त्रप्रभा-वेण, तदङ्गात्पापमुल्बणं । निःसृतं कृमिरूपेण पश्चात्तापेन तापितम् ।। त्रिवर्षान्ते च निष्पापो बभूव द्विजसत्तमः (द्विज-श्रेष्ठो विप्रः) । पठित्वाऽक्षरमालां च जजापादिचरित्रकम् ।। द्वादशाब्दमिते काले, काश्यां गत्वा तु स द्विजः । (प्राक् व्याध-कर्मा, नीचवीर्यदुष्टागर्भसमुत्पन्नः संप्रति निष्पापो द्विजः) अन्नपूर्णां महादेवीं तुष्टाव परया मुदा ।। सुष्वाप तत्र मुदितः (प्रसन्नः) स्वप्ने प्रादुरभूच्छिवा । दत्त्वा तस्मै हि ऋग्विद्यां पुनरन्तरधीयत ।। उत्थाय स द्विजो धीमान्, लब्ध्वा विद्यामनु-त्तमां । विक्रमादित्यभूपस्य यज्ञाचार्य्यो बभूव ह ।।' (भ० पु० प्रतिसर्गपर्व) इति ।

---

+स्ववीर्येण तं समुत्पादकस्य व्याधस्येत्यर्थः ।

‡ईशस्य—शिवस्येदं ऐशं अक्षरं='ॐ नमः शिवायेति' मन्त्रमित्यर्थः ।

अनेनोपाख्यानेनेदमवगम्यते–किलायं—'असच्छूद्रकुलोत्पन्नो दुष्टो व्याधोऽपि कर्मणा। शुभेनाभूद् महान् विप्रः श्रेष्ठराजेन पूजितः॥ एवमेकशरीरेण गुणकर्मप्रभावतः। जीवता तेन दृष्टं तद् वर्णयोः परिवर्तनम्॥ आपस्तम्बेन यत्प्रोक्तं, जघन्यपूर्व-वर्णयोः। ज्ञायतेऽस्मादुपाख्यानात्, जीवत्सु परिवर्तनम्॥(मा० भा०) इति।

## अन्यस्य पापीयसो व्याधस्य च कथा

भविष्यपुराणेऽन्यस्यातीवपापपरायणस्य महादुष्टस्य व्याधस्य कथाऽपीदृशी श्रूयते–तथाहि सः पापीयान् व्याधः कंचन ब्राह्मणं प्रति स्वकृतानि महान्ति पापानि प्रतिपादया-मास–'ब्राह्मणानां सहस्राणि,× सत्स्त्रीणामयुतानि च। निह-तानि मया ब्रह्मन्! सततं पापकारिणा॥÷ कां गतिं प्रतिपत्स्यामि ब्रह्मघ्नोऽहं द्विजोत्तम!। इदानीं तप्तुमिच्छामि, तपोऽहं त्वत्समीपतः॥' इत्येवं तस्य तत्सर्वोत्तमब्राह्मणदर्शन-मात्रेण पश्चात्तापविशिष्टा शुभा मतिः संजाता। पश्चात् तेन तत्समीपं वसता व्याधेन व्याघ्रात् तस्य ब्राह्मणस्य रक्षा कृता, तेन सः तं प्रति प्रसन्नोऽभूत्। तस्मै तेन वरोऽपि दत्तः। व्याध उवाच–'एष एव वरो मह्यं, यत्त्वं मां भाषसे द्विज!। अतः परं वरेणाहं किं करोमि प्रशाधि माम्॥' इति। ऋषिरुवाच–'इदानीं तव पापानि, देविकाऽभिषवेण (देविकानदीस्नानेन) च। मद्दर्शनेन च चिरं विष्णुनामश्रुतेन च॥ नष्टानि शुद्ध-

---

×साध्वीस्त्रीणां दशसहस्राणि, ÷तदानीं कश्चन दण्डधरो राजा नासीत् किम्? अस्य महादुष्टस्य विनिग्रहकरणे तस्य सामर्थ्यं नाभूत् किम्? लोकाश्च कीदृशाः दुर्बलाः आसन् वेति न ज्ञायते।

देहोऽसि, साम्प्रतं नात्र संशयः । इदानीं वरमेकं त्वं गृहाण मम सन्निधौ ।। तपः कुरुष्व साधो ! त्वं चिरकालं यदिच्छसि । इत्येवमृषिणाऽऽदिष्टो व्याधोऽतप्यत संयतः ।। तपःसिद्धिप्रभावोत्थ-स्वन्नदानादिसेवया । ऋषिं दुर्वाससं सोऽयं कदाचित्—समतोषयत् ।।' इति । परमसन्तुष्टः स दुर्वासाः तस्मै वरमीदृशमदात्—'उवाच-वेदाः साङ्गास्ते सरहस्य-पद-क्रमाः । ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते ।। एवं प्रादाद्वरं तस्य दुर्वासा नाम चाकरोत् । 'भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति ।' 'एवं दत्तवरो व्याधस्तमाह मुनिसत्तमम् । व्याधो भूत्वा कथं ब्रह्मन् ! वेदानध्यापयास्यहम् ।।' (भ० पु० प्रतिसर्ग० पर्व० खं० २ । अ० ३३) दुर्वासा ऋषिरुवाच—भो! तपःप्रभावेण ते पापमयं प्राक्शरीरं नष्टम्, इदानीं तपोमयं शुद्धं वेदादिविद्यासम्पन्नमभिनवं शरीरमुत्पन्नम् । अतस्त्वं शुद्धकायोऽसि सत्यमेतद् ब्रवीमि ते । अतो वेदादिशास्त्राणामध्ययने किमध्यापनेऽपि समर्थोऽसि ।

पश्चात् तेन पृष्टम्—? किं मे द्वे शरीरे स्तः ? । दुर्वासा ऋषिरुवाच-एकस्मिन्नेव स्थूलशरीरे वर्तमानं सूक्ष्मशरीरं प्राक् ज्ञानवर्जितमधर्मोपचितमासीत् । तदिदानीं तपःप्रभावेण नष्टमभूत् । तत्स्थानेऽत्यन्तधार्मिकं ब्रह्मचर्याहिंसाशमदमदयादिव्रतसंयुक्तं शरीरमभिनवं जातमिति तात्पर्यम् । अतस्त्वं तपोवेदादिशास्त्रज्ञानशमदमादिसद्गुणप्रभावेण महान् सत्यतपा नामाऽग्रगण्यो यशस्वी ऋषिः संजातोऽसि । एतेन वेदान्तदर्शनस्य शूद्राधिकरणमपि समालोचितम् । ऋषीणामौदार्यस्य पराकाष्ठाऽप्यवगता ।

## अन्धवृद्धस्य दीर्घतमसो महर्षेश्चरितम्

महाभारतस्यादिपर्वणि किल दीर्घतमसः कथेदृशी विद्यते। यथाहि–धर्मात्मा राजा बलिरुवाच दीर्घतमसं प्रति–'सन्तानार्थं महाभाग ! भार्यासु मम मानद !। पुत्रान् धर्मार्थकुशलानुत्पादयितुमर्हसि ।। एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः। तस्मै स राजा स्वां भार्यां 'सुदेष्णां' प्राहिणोत्तदा ।। अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह। स्वां तु धात्रेयिकां ( शूद्रां दासीं ) तस्मै वृद्धाय प्राहिणोत्तदा ।। तस्यां काक्षीवदादीन् सः, शूद्रयोनावृषिस्तदा। जनयामास धर्मात्मा पुत्रानेकादशैव तु ।' काक्षीवदादीन् पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः। उवाच तमृषिं राजा 'ममेम' इति भारत! ।। नेत्युवाच महर्षिस्तं ममेम इति चाब्रवीत। शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ।। अन्धं वृद्धं च मां दृष्ट्वा सुदेष्णा महिषी तव। अवमन्य ददौ मूढां शूद्रां धात्रेयिकां मम ।। ततः प्रसादयामास पुनस्तमृषिसत्तमम्। बलिः सुदेष्णां स्वां भार्यां तस्मै स प्रहिणोत्पुनः। तां स दीर्घतमाऽङ्गेषु स्पृष्ट्वा देवीमथाऽब्रवीद्। भविष्यन्ति कुमारास्ते तेजसाऽऽदित्यवर्चसः ।। अङ्गो बङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः। तेषां देशाः समाख्याताः स्वनामकथिता भुवि ।। एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः।' 'एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि। जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ।।' ( म० भा० आदि० १०४। मत्स्यपुराणेऽपि अ० ४८ )।

एतेनेदं स्पष्टतोऽवगम्यते-प्राक् नियोगधर्मोऽप्यासीदिति। अन्धस्य वृद्धस्य दीर्घतमसो महर्षेः कीदृशी सिद्धिरासीत् ?। यया युवतौ शूद्रायां दास्यां भूयांसः काक्षीवदादीन् पुत्रान्,

क्षत्रियाण्यां सुदेष्णायां राज्ञ्याञ्च भूयांसस्तेजस्विनः क्षत्रियकुमारान् उत्पादयामास । स्वकलेवरस्य वृद्धत्वान्धत्वनिवारणे युवत्वसुन्दरत्वचक्षुष्मत्त्वादिसंपादने च सा सिद्धिः कथं विलुप्ता बभूव। अथवा प्रभूतपुत्रोत्पादनसमर्थस्य तस्य वृद्धत्वं कथं व्यवह्रियेतापि ?। सुदेष्णापती राजा बलिस्तु नपुंसको वा क्षयादिरोगपीडितो वा शापाक्रान्तो वा ज्ञायते । इयं किल कथा यथार्था वा प्रशंसात्मकार्थवादरूपा वेति को यथार्थतया ज्ञातुं प्रभवेत् ? । अनेनाभीष्टं नियोगप्रसूतवर्णसांकर्यमप्यवगतं भवति।

## शूद्रयोनौ प्रजातस्य काक्षीवतो ब्राह्मण्यलाभः

'काक्षीवांस्तु ततो गत्वा, सह पित्रा गिरिव्रजम् । दृष्ट्वा, स्पृष्ट्वा च पितु–( दीर्घतमसः )र्वै, स ह्युपविष्टश्चिरं तपः ।। ततः कालेन महता तपसा भावितस्तु सः । विधूय मातृजं कायं ब्राह्मण्यं प्राप्तवान् विभुः ।। ततोऽब्रवीत् पिता तं वै पुत्रवानस्म्यहं त्वया । सत्पुत्रेण तु धर्मज्ञ ! कृतार्थोऽहं यशस्विना ।। ब्राह्मण्यं प्राप्य काक्षीवान् सहस्रमसृजत् सुतान् । कौष्माण्डा गौतमाश्चैव स्मृताः काक्षीवतः सुताः ।।' ( मत्स्यपुराणे अ० ४८ ) इति । ब्राह्मण्यलाभस्येदमपि प्रत्यक्षं फलं तस्य सहस्रपुत्रोत्पादनलक्षणं जातम् । एतेन बहुपत्नीपरिग्रहोऽपि तस्याभिव्यज्यते । अन्यथैकस्यां सहस्रसुतोत्पादनं कथं शक्यं स्यात् ? मातृनिष्ठसामर्थ्यमपि । स्यादपि तपःसिद्धिप्रभावेण, तेषां पुत्रादीनां निवासपोषणादिकमपि च। किमत्र तथ्यमिति सर्वेश्वरो जानीतादिति । परन्त्वेतत् तथ्यमेव तेषु काक्षीवदादिषु 'केचित् मातृसजातीयाः, पितृवर्णाश्च केचन । गुणकर्मानुसाराच्च केचिद्वर्णान्तरं गताः ।।' इति ।

## परशुरामवृत्तान्तोऽपि वर्णपरिवर्तनं विज्ञापयति

यद्यपि-पुरातनकालादेव गुणकर्मादिपरिवर्तनप्रयुक्तं वर्ण-परिवर्तनं प्रवर्तमानमासीत्; तथापि निखिलक्षत्रियप्रद्वेषिणा महाबलवता परशुरामेण भार्गवेण तु तद्विशेषतः सम्पादितमभूदिति पुराणभारतादितः स्पष्टमवगम्यते। तद्यथा—श्रीमद्भागवते नवमे—'त्रिसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः।' इति। (९।१६।१९) स्वपतिमृत्युसमये त्रिःसप्तकृत्वो रेणुकया परशुरामजनन्या दुःखावेशादुरस्ताडनं कृतं, ततः परशुरामस्तावत्कृत्वः क्षत्रकुलमुत्सादितवानिति प्रसिद्धिः। प्रबलतमसैन्येन सहोग्रतमः परशुरामः सर्वत्र भारते भ्रमणं कृत्वा—एकस्य क्षत्रियस्यापराधस्य कृते सर्वानपि निरपराधान् क्षत्रियान् भूयो भूयो विनाश्य तन्निखिलमपि राज्यमात्मसात्कृत्वा ब्राह्मणेभ्यो ददौ। यदाह—'ददौ प्राचीं दिशं होत्रे, ब्रह्मणे दक्षिणां दिशम्। अध्वर्यवे प्रतीचीं वै, उद्गात्रे उत्तरां दिशम्॥ अन्येभ्योऽवान्तरदिशः, कश्यपाय च मध्यतः। आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततःपरम्॥' (भा० ९।१६।२१-२२) इति। होत्रे=होतृसंज्ञकाय ऋत्विक्ब्राह्मणाय, प्राचीं दिशं=पूर्वदिक्प्रदेशमित्यर्थः। एवमग्रेऽपि बोध्यम्।

पुनः पुनः एकविंशतिवारं क्षत्रियाणां निखिलानां विनाशेऽयमभिप्रायः। दुर्बलाः क्षत्रियास्तावत् परशुरामप्रबलभयेन यत्र कुत्रापि पर्वतारण्यादौ निलीना अभूवन्, तेषामप्यन्वेषणेन लब्धानां जीवनान्तो भवेदिति। तदा तु तन्महाभयेनातिव्यथिताः क्षत्रियाः स्वस्वकीयसन्तानजीवनरक्षणायेदं प्रोचुः—'न वयं क्षत्रियाः स्मः, किन्तु ब्राह्मणाः स्मः, वैश्याश्च स्मः, वयं वेदतदङ्गादीनि शास्त्राणि पठामः, न शस्त्राणि धारयामः, वयं कृषि-

वाणिज्यादिकमेव कुर्मः' इत्यादिकमिति । क्षत्रियवेषादिपरिव-र्जनेन ब्राह्मणादिवेषादिधारणेन च यैः स्वक्षत्रियवर्णत्वं परित्यज्य वर्णपरिवर्तनं विहितम् । तान् निखिलान् वर्णान्तरप्रविष्टान् परशुरामो न विध्वंसितवान् किन्तु तान् परितत्याज । एवं परशुरामेण स्वब्राह्मणसंघविवर्धनाय अन्यान् कैवर्तनिषादादीन् महाशूद्रानपि ब्राह्मणांश्चकार इति यत्र तत्र पुराणादौ स्पष्टं प्राक् प्रदर्शितमप्यनुसंधेयम् ।

एवं परशुरामेण ये ये क्षत्रियाः विनाशितास्तेषां विधवा युवतयो ब्राह्मणादिभ्यो नियोगं कृत्वा पुनरपि क्षेत्रप्राधान्यम-भ्युपेत्य क्षत्रियसन्तानानि-उत्पादयामासुः इति महाभारत-पुराणादौ प्रसिद्धम् । यथाहि—'तदा निःक्षत्रिये लोके भार्गवेण कृते सति । ब्राह्मणान् क्षत्रियाः (विधवाः) राजन् ! सुतार्थि-न्योऽभिचक्रमुः ।। ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः । तेभ्यश्च लेभिरे गर्भं क्षत्रियास्ताः सहस्रशः ।। ततः सुषुविरे राजन्! क्षत्रियान् वीर्यवत्तरान् ।। कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये । एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ।। जातं वृद्धं च धर्मेण सुदीर्घेणायुषाऽन्वितम् । चत्वारोऽपि ततो वर्णाः बभूवुर्ब्राह्मणोत्तराः ।।' (म० भा० आदिप० ६४।३।६) 'एवं निःक्षत्रिये लोके कृते तेन महर्षिणा । ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः ।। उत्पादितान्यपत्यानि, ब्राह्मणैर्वेदपा-रगैः । 'पाणिग्राहस्य तनयाः' इति वेदेषु निश्चितम् ।।' (वराह-पुराणे अ० ३७।३६-४०) इति ।

गीतासु भगवताऽर्जुनकृतवर्णसंकरशंकानिवारणं कथं न कृतम्?

अत एव कश्चिदत्र ब्रूते—वर्णानां मिथः सांकर्यं पुरातन-कालादेव संप्रवृत्तमासीदिति । अत एव गीतासु अर्जुनेन-युद्धस्ये-

दनेकं प्रबलमनिष्टं फलं प्रदर्शयितुं 'स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसंकरः । संकरो नरकायैव ।' ( १।४१-४२ ) इति विधवासु युवतिषु प्रबलकामदोषसमुपेतासु विभिन्नवर्णनियोगात् जायमानाः वर्णसंकरप्रजाः कुलस्य नरकं दातुं प्रभवन्तीति याऽऽशंका कृता । परन्तु भगवान् श्रीकृष्णः तस्याः निवारणमकृत्वा स्वभक्तसखमर्जुनं क्षत्रियधर्माय युद्धायैव प्रवर्तयामास ।

तदाशंकायाः समाधानं भगवता कथं न कृतमिति? तद्विषये कश्चनैवं ब्रवीति । यतो भगवता श्रीकृष्णेनार्जुनस्य वर्णसंकरप्रजानिर्माणशंकायाः स्वमनसि-इत्थमुपहासो विहितः—भो प्रिय! अर्जुन ! वर्णसंकरतायाः शंका शास्त्ररहस्यसमाजपरिपाटीज्ञानशून्येन मनुजेनानिष्टरूपेणोद्भाविता कथं त्वया क्रियते ? । समीक्ष्यताम्—भो ! भवतां पाण्डवानामितिवृत्तम् । भवत्सु किं वर्णसांकर्यं नास्ति? । भवत्पितरि पाण्डौ, तदुत्पादके भवत्पितामहे भगवति व्यासेऽपि तत्किं नास्ति? । तत्किं भवदादिषु अनिष्टदूषणरूपेणोपलभ्यते वा, किमभीष्टभूषणरूपेण वा । अभीष्टभूषणरूपेणैवोपलभ्यते इति ब्रूमः । भवन्तः कीदृशाः सत्यप्रतिज्ञाः धर्मनिष्ठाः शूरवीराः समुदारचरिताश्च सन्ति । भवत्पितामहो भगवान् व्यासोऽपि 'नमोऽस्तु ते व्यास! विशालबुद्धे!' 'केशवं बादरायणम्' इत्यादिभिः संस्तुतः प्रसिद्धः सर्वविद्वज्जनललामभूतोऽष्टादशपुराणभारतादिविविधग्रन्थ—निर्माता निखिलार्यावर्तप्रदेशाभ्यर्हणीयभूषणरूपश्चास्तीत्यत्र नास्ति कस्यापि सचेतसः शंकागन्धोऽपि । यस्य पुत्रः शुकदेवोऽपि महान् वीतरागो ब्रह्मनिष्ठः श्रीमद्भागवतादिमप्रवक्ता भविष्यतीति । अत एवोक्तं केनचिद् विदुषा—

'कानीनस्य मुनेः स्वबांधववधूवैधव्यविध्वंसिनः । नप्तारः (पौत्राः) किल गोलकस्य (पाण्डोः) तनयाः कुण्डाः स्वयं पाण्डवाः ।। ते वै पञ्च समानदारनिरताः तेषां कथाकीर्तनात् । पापं नश्यति वर्धते च सुकृतं, धर्मस्य सूक्ष्मा गतिः ।।' इति । 'परदारेषु जायन्ते सुतौ च कुण्डगोलकौ । पत्यौ जीवति कुण्डः स्यात्, मृते भर्तरि गोलकः ।।' कन्यायाः अविवाहितायाः मत्स्यगंधायाः पुत्रः कानीनो व्यास इत्यर्थः ।

## शंकानिवारणमित्थम्

अपि च–'विशिष्टायाः विशिष्टेन संगमो गुणवान् भवेत् ।' ( महाभारतस्य नलोपाख्याने ) इति न्यायेन श्रेष्ठवर्णानां पाण्डवादौ गुणवत्यभीष्टे सांकर्येऽपि कर्मादिसांकर्यं नास्ति । यतः-क्षत्रियगुणकर्मणां तेषु सुप्रतिष्ठितत्वात् । अतः सांकर्यं वर्णप्रयुक्तमेव न मन्तव्यमपि तु कर्मादिप्रयुक्तमपि सांकर्यं शास्त्रवर्णितं विद्यत एव । उक्तं च– 'अर्थाश्रयाद्वा कामाद्वा, परकर्मनिषेवणात् । स्वकर्मणाञ्च त्यागेन जायन्ते वर्णसंकराः ।।' (वा०स्मृ० )अत एवोक्तो महाभारतेऽपि परकर्मसेवनात् परवर्णप्रवेशः । यथाहि–'यस्तु विप्रत्वमुत्सृज्य क्षात्रं धर्मं निषेवते । ब्राह्मण्यात् स परिभ्रष्टः, क्षत्रयोनौ प्रजायते ।।'९।। क्षत्रयोनौ=क्षत्रियवर्णे, प्रजायते=गण्यमानः संपन्नश्च भवति, वर्तमानकालनिर्देशात् जन्मान्तरे क्षत्रिययोनौ जायते इति वर्णनमयुक्तम् । 'वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः । ब्राह्मण्यं दुर्लभं प्राप्य, करोत्यल्पमतिः सदा ।।१०।। स द्विजो वैश्यतामेति, वैश्यो वा शूद्रतामियात् । स्वधर्मात् प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुते ।।११।। क्षत्रियो वा महाभागे ! वैश्यो वा धर्मचारिणि ! । स्वानि कर्माण्यपहाय, शूद्रकर्म निषेवते ।।१२।।

स्वस्थानात् स परिभ्रष्टो वर्णसंकरतां गतः। ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः ॥१३॥' ( म० भा० अनुशासन-पर्वणि० अ०१४२ ) इति।

वस्तुतो यथायोग्यं मानवानां तत्तद्गुणकर्मणां जीवननिर्वाह-साधनानाञ्च मिथोऽसंकीर्णव्यवस्थैव समुचिता वर्णव्यवस्था संपन्ना भवति। यथा गृहे स्थितानामन्नवस्त्रपादत्राणादिपदार्थानां तत्तन्नियतस्थानेषु स्थापनरूपैव व्यवस्था स्वीक्रियते। यदाहि पादत्राणस्थाने वस्त्राणि, वस्त्रस्थानादौ च पादत्राणादिकं स्थापितं स्यात्, तदा साऽव्यवस्थैवाभिधीयते, तद्वत्। अतस्तत्तद्ब्राह्मणादि-स्वरूपसिद्धये कर्मसांकर्यस्य निवारणमपरिहार्यरूपेण नितान्त-मपेक्ष्यत एव। समानशीलव्यसनेषु सख्यं विवाहश्च समुचित एव। 'विवादश्च विवाहश्च समयोरेव शोभते।' अत एव यथा प्राक्काले पृथक् पृथक्-तत्तन्नाम-कर्म-स्वभाव-वेषभूषादिमूलैव वर्णव्यवस्थाऽवगता बभूव, तथा संप्रति तादृशी वर्णव्यवस्था सर्वत्र दुर्लभैव प्रतीयते, यतः प्रायः सर्वेषु ब्राह्मणादिषु कर्मादि-सांकर्यस्य सर्वत्र दृष्टत्वादिति। अतः—'ब्रह्मा कर्मानुसारेण चातुर्वर्ण्यमकल्पयत्।' एवं वायुपुराणादौ सुस्पष्टं वर्णितं यथा॥ 'ब्रह्मा स्वयंभूर्भगवान् दृष्ट्वा सिद्धिं तु कर्मजां। मर्यादाः स्थापयामास यथाऽऽरब्धाः परस्परम् ॥' (८।३४) इति।

## फलवैषम्यं किं सूचयति ?

यथा मधुरादाम्रबीजात् उत्पादितस्तरुर्मधुराण्येव फलानि जनयति चेत्, तदा तु 'अयमाम्रवृक्षः' इति शिष्टैः प्रोच्यते। यदि कटूनि चाम्लानि च फलानि समुत्पादयति तदा कथं विचारकैः अयमाम्रवृक्षोऽस्तीत्यभिधीयेत?। तथैव जन्मजातिकृते ब्रह्मक्षत्रादिवर्णानां परस्परं भेदेऽभ्युपगते कश्चन स्वभावादि-

कुतो विशेषः प्रत्यक्षमुपलभ्येत, शतशो व्यभिचरितत्वात् न तु तत्तथोपलभ्यते । वैपरीत्यमप्युलभ्यते । यथा—दृश्यन्ते हि ब्राह्मणब्रुवा अपि नितान्तं बुद्धिहीनाः अनृतमायादिपराः पयोमिश्रितपयोविक्रयिणो भोजननिर्माणादिश्ववृत्तितत्पराश्च । भूयांसः क्षत्रिया अपि कृषकाः किंकराः गवादिपशुपालकाः शौर्यपराक्रमादिभावशून्या वणिक्वृत्तिमाश्रिताश्च, अक्षत्रिया अपि बलपराक्रमशालिनः प्रबलशत्रुजेतारश्च, अनेके शूद्रा अपि ब्राह्मणोचित–शीलबुद्धिविभवाद्युपेताश्चेति ।

तथा चानेन प्रत्यक्षविपरीतदर्शनेनापि–शमशौर्यव्यापारचातुर्यसेवाभावादिगुणमूलको यज्ञयुद्धवाणिज्यश्रमादिकर्ममूलकश्चायं वर्णविभागः शास्त्रशिष्टसमाजाभ्यासुपनिबद्धो न तु प्राकृतिक इत्ययमर्थः सुष्ठुः संसाधितः । इदानीमपि च तस्य तथैव प्रचारः समाजसंघट्टनराष्ट्रोन्नतिसाधकोऽस्ति । न चात्र कोऽपि शास्त्रविरोधगन्धोऽप्यस्तीति सम्यक्प्रतिपादितमेव समीक्षानिपुणैः समीक्ष्यताम् ।

## तत्तदितिहासादिसाक्षिकं भारते सर्वत्र वर्णपरिवर्तनम्

भारतस्य विशालराष्ट्रस्य तत्तत्खण्डेषु तत्तदितिहासादिना प्रमाणेन समुपलभ्यन्ते वर्णविपर्ययत्वस्यानेकान्युदाहरणानि । आचार्यक्षितिमोहनसेन — प्रणीतेऽभिनव–भारतीग्रन्थमालायां–कलकत्तानगरीतः प्रकाशिते 'भारतवर्ष में जातिभेदे' ति नाम्नि हिन्दीग्रन्थे 'समाज में जीवन और गति' इति संज्ञकेऽध्याये सन्ति प्रतिपादितानि । तानि यथा–चित्तपावनविप्रवत् महाराष्ट्रे प्रसिद्धाः जाबालकाष्ठ-ब्राह्मणाः, आन्ध्रप्रदेशे प्रसिद्धाः लिंगायतसंप्रदाये प्रवर्तमानाः आराध्य–ब्राह्मणाः, गुर्जरप्रदेशे

च प्रसिद्धाः कण्डोल×—अम्भीर—अनाविलब्राह्मणाः, राजस्थानादौ प्रसिद्धाः पुष्करणा-ब्राह्मणाश्च प्राक् विभिन्नवर्णा आसन्। कदा कदा राजानोऽपि स्वसामर्थ्येन निम्नकोटिकानां जनानामपि ब्राह्मणत्वं वा क्षत्रियत्वं वा निर्ममिरे। प्रतापगढ-ब्राह्मणा अपि प्राक् अहीरजातीयाः आसन्, अत एव तान् अहीरान् राजा माणिकचन्द्रः स्वप्रसादद्योतनाय ब्राह्मणान् अकरोत्।

गोरक्षपुरे वर्तमाना ब्राह्मणाः प्राक् बंजारा आसन्, संप्रति ते पाण्डेय-शुक्ल-मिश्राद्युपसंज्ञाभिः प्रसिद्धाः सन्ति। आमता-डाप्रदेशस्य पाठकब्राह्मणाः प्राक् लोधजातिप्रसूता आसन्। उन्नावप्रदेशस्य महावरक्षत्रियाः प्राक् कहारजातिजन्याः, डोमवारक्षत्रियाश्च डोमजन्याश्चासन्। राजा तिलकचन्द्रो युद्धसहायरूपोपकारकृतज्ञताज्ञापनाय तान् क्षत्रियान् चक्रे। ओझाब्राह्मणा अपि प्राक् द्राविडवैगाजातितः प्रसूताः आसन्। बिहारप्रदेशीय--भूमिहार--उत्तरप्रदेशीयतगा—ब्राह्मणानामपीतिहास ईदृश एवास्ति। पंजाबराष्ट्रस्य कांगडा-कोटला-बहावल-जब्बाल-प्रदेशानां क्षत्रियाः प्राक् ब्राह्मणाः आसन्। अकाली-दलस्य नेता प्रसिद्धः कट्टरशिक्खो मास्टर—तारासिंहोऽपि प्राक् ब्राह्मण आसीत्। पंजाबप्रदेशात् ब्राह्मणादीन् हिन्दून् दूरीकृत्य शिक्खस्थानस्य प्रणयनाय महान्तं प्रयत्नं करोतीति संप्रति प्रसिद्धम्। शाकद्वीपीयब्राह्मणानामितिहासः प्राक् प्रतिपादितः। पंजाबप्रदेशस्य आभीर-गुज्जर-ब्राह्मणाः एशिया-युरोपयोर्मध्य-

×युगपदेव गलेषु यज्ञोपवीतं निधायाष्टादशसहस्र (१८०००) संख्येयाः कण्डोलाः ब्राह्मणाः बभूवुरिति तन्महत्त्व-बोधककण्डोलपुराणादवगम्यते।

सीमातस्ते समायाताः विदेशीयाः सन्ति। श्रीमता मध्वाचार्य्येणापि स्वसंप्रदाये ब्राह्मणानामभिवृद्धयेऽभिनवब्राह्मणा विनिर्मिताः आसन्। कर्णाटकप्रदेशीया मत्तिब्राह्मणाः प्राक् कैवर्ताः आसन्, कस्यचित् योगिसंन्यासिकृपातस्ते ब्राह्मणा अभूवन्। स्थानीयग्रन्थपुराणेभ्योऽवगम्यते यत्-कदम्बवंशीयस्य मयूरवर्मणः प्रशासनसमये यज्ञादिकार्यसिद्धये स राजा भूयांसोऽब्राह्मणानपि यज्ञादिकर्तॄन् ब्राह्मणान् चकार। अत एव तेषां अभिनवनिर्मितब्राह्मणानां गोत्राणि संप्रत्यपि क्षुद्रजन्तुवृक्षसंज्ञाभिः समलंकृतानि सन्ति।

नम्बुद्रिब्राह्मणानामितिहासः प्राक् संक्षेपतः प्रदर्शितः। तेऽपि पुरा मत्स्यजीविन आसन्। एवं भूयांसः कैवर्ता ब्राह्मणा अभूवन् परन्तु मुत्राचकैवर्तवाणाः क्षत्रियेभ्यः कस्माच्चिदपराधात् पतिताः भूत्वा कैवर्ता अभूवन्। परशुरामः केरलदेशे मत्स्यनिरोधजालसूत्रेभ्यः उपवीतानि निर्माय तुलुनाम्ना प्रसिद्धानां मत्स्यजीविनां गलेषु तानि निधाय तान् ब्राह्मणान् चक्रे। एवं नागमार्चीब्राह्मणानामपीदृश इतिहासोऽस्ति। भोद्रीब्राह्मणानां पूर्वपुरुषो नापित आसीत्। तम्बलब्राह्मणाः गोदावरीकृष्णाप्रदेशेषु ब्राह्मणत्वेन व्यवहृता अपि त्रिलिङ्गप्रदेशे शूद्रत्वेन मन्यमाना अनादृताश्च भवन्ति।

भारतस्यानेकप्रदेशेषु कृषकाः ब्राह्मणाः सन्तिः, यान् अन्यान्यब्राह्मणाः प्राक् कृषकाः आसन्, पश्चात् ते ब्राह्मणा अभूवन्निति मन्यन्ते। यथा गुर्जरप्रदेशस्य भाटलाः, महाराष्ट्रस्य सेनव्यः, कर्णाटकस्य हैगाः, उडीसाप्रदेशस्य मस्तानाः कामाश्च ज्वालादेवीस्थलवास्तव्याः भोजकसारस्वताश्च प्राक् कृषकाः आसन्। मरुप्रदेशस्य डकोतब्राह्मणाः आभीरमातृतः, गरुडिया-

ब्राह्मणाश्च चर्मकारकन्यातो जन्म लेभिरे। ते किल शनिं पूजयन्ति, निकृष्टदानञ्च परिगृह्णते। व्यासोक्ताः ब्राह्मणाः व्यासवचनमात्रेणैव विप्रा बभूवुः। बंगप्रदेशस्य युगीब्राह्मणाः प्राक् शूद्रा आसन्। टिपरापत्तनस्थेन कृष्णचन्द्रदालालेन तेषां कण्ठेषु यज्ञोपवीतानि स्थापितानि। संप्रति तेषु केचित् बहिर्गत्वा पण्डिताः शर्माणः उपाध्यायाश्च बभूवुः। द्राविडप्रदेशस्थाः पटवेगराः प्राक् गुर्जरदेशाद् दक्षिणदेशमागत्य वयनजीविनोऽभूवन्। कस्यचिद्विशालहृदयस्य ब्राह्मणस्यानुग्रहात् वेदमुपवीतं गोत्राणि च गृहीत्वा शास्त्रीत्युपसंज्ञावन्तो ब्राह्मणा बभूवुः। एवं सौराष्ट्रका अपि महम्मदगजनवीप्रयोजितसोमनाथालयविध्वंससमये सौराष्ट्रात् भयभीताः सन्तो द्राविडं प्राप्य अय्यराचार्य्याद्युपाधिं परिगृह्य ब्राह्मणा अभूवन्। अत एव संप्रत्यपि तान् द्राविडब्राह्मणास्तत्त्वेन न मन्यन्ते। दक्षिणभारतस्य भाटाः प्राक् ब्राह्मणा आसन्, पश्चात् क्षत्रियादिसम्बन्धात् पतिता अभूवन्निति अनन्तकृष्णशास्त्री मनुते।

एवमासामप्रदेशस्य करियाः शरणियाश्च कस्यचित् हिन्दुमहात्मनः सकाशात् राममन्त्रं गृहीत्वा क्षत्रिया अभूवन्। एवं तत्रत्याः गणकाः ब्राह्मणाः बभूवुः, ते प्राक् आहोमसंज्ञकमंगोलियनजातिप्रसूता आसन्। सेंगरसंज्ञकाः प्राक् शृङ्गिमहर्षिप्रभवत्वात् ब्राह्मणा आसन्, पश्चात् क्षत्रियविवाहादिसम्बन्धात् क्षत्रियाः बभूवुः। दक्षिणभारतस्य वस्त्रसीवनकर्तारः सूचिधारकाः वदन्ति, वयं प्राक् क्षत्रियाः आस्म, परशुरामस्य भयेन क्षत्रियत्वमस्माभिः परित्यक्तमिति। ये किल स्वस्त्रीः सदा वस्त्रावरणग्रथिताः कुर्वन्ति, बहिः सर्वे जनाः तन्मुखानि द्रष्टुं न शक्नुवन्ति, विधवाविवाहं कृष्यादिकञ्च न कुर्वन्ति,

ते क्षत्रियाः भवन्ति । ये किल विधवाविवाहकृष्यादिकं कुर्वन्ति, स्वस्त्रीणां मुखानि अन्येऽपि द्रष्टुं शक्नुवन्ति, ते न क्षत्रियाः किन्तु जाटा भवन्ति इत्येकस्मात् क्षत्रियवंशात् प्रसूतानां विभागद्वयं जातम् । रेवाडीप्रदेशवास्तव्याः आभीराः विधवा-विवाहं परित्यज्य, स्वस्त्रीनिष्ठवसनावरणप्रथाञ्चाभ्युपगम्य स्वान्याभीरसम्बन्धं विहाय स्वतन्त्राः श्रेष्ठाः क्षत्रियाः बभूवुः ।

राजस्थानस्य हुसेनी—ब्राह्मणाः हिन्दुयवनोभयभावमभ्यु-पगन्तॄणामनेकेषां पुरोहिताः गुखो बभूवुः । मणिपुरप्रदेशस्था ब्राह्मणाः तत्प्रदेशशूद्रादिकन्याभ्यः प्रादुरभूवन् । सेनराजगणाः ब्राह्मणवंशप्रसूता अपि क्षत्रियवृत्तिमाश्रित्य परमब्रह्मक्षत्रिया बभूवुः । सिलहटप्रदेशस्थानां दाशजातिकानां पुरोहिताः ब्राह्मणाः प्राक् मालाकाराः आसन्, कश्चन राजा प्रसन्नो भूत्वा तान् यज्ञोपवीतं ग्राहयित्वा ब्राह्मणान् चक्रे । बल्लाल-सेनो राजा बंगप्रदेशवास्तव्यानां सुवर्णवणिजां शूद्रत्वं स्थाप-यामास । बल्लालचरिते त्रयोविंशतितमेऽध्याये तद्वर्णनमित्थमव-गम्यते—'यदि दांभिकान् सुवर्णवणिजः शूद्रत्वे न पातयिष्यामि, गोब्राह्मणघातेन यानि पातकानि, तानि मे भविष्यति' इति । मध्यभारतस्य गौंडाः शनैः शनैः क्षत्रिया अभूवन् । अवधप्रदे-शस्य भूयांसः शूद्रा अपि क्षत्रियाः बभूवुः । भूतप्रेतनिवारकाः ओझासंज्ञकाः अनार्या बैगा अपि शनैः शनैः ब्राह्मणा अभूवन् ।

इत्येवमाचार्यक्षितिमोहनसेनेन तत्तदितिहासादिवृत्तान्तेभ्यो भारतस्य सर्वप्रदेशेषु वर्णपरिवर्तनस्य पूर्वोक्तान्यनेकोदाहरणानि प्रदर्शितानि । तत्प्रणीतः 'भारतवर्षमें जातिभेद' इतिसंज्ञको ग्रन्थो हिन्दीप्रसिद्ध-लेखकेन पण्डितहजारीप्रसादद्विवेदिना

सम्पादितः, भारतवर्षीयसांस्कृतिकयथार्थेतिहासरूपेण सम्मानितश्चाभूदिति ।

एवं 'सरयूपारीणसर्वस्वः' इतिसंज्ञकस्य ग्रन्थस्य १० पृष्ठे—'जयचन्द्रेण राज्ञा मिथिलास्थितेन शिवसिंहेन राज्ञा चारण्यककोलभिल्लमुशहरादिभ्यः सपादलक्षसंख्याकाः कृत्रिमाः अभिनवा ब्राह्मणा विनिर्मिताः, ताभ्यां तेषां पूजा कृता, आदरसत्कारावपि च विहितौ । ये किल कन्नौजियासरयूपारीणदलाभ्यां बहिर्भूताः देशीयब्राह्मणाः अभूवन्निति; एवं 'पंक्तिपावनपरिचयः' इति ग्रन्थेऽपि मांडाराजेन विजयपुराधीशेन राज्ञा चैवंभूताः कृत्रिमा अभिनवा ब्राह्मणा विनिर्मिताः इति, एवं शालिवाहनस्य राज्ञोऽप्यभिनवकृत्रिमब्राह्मणनिर्माणकथा प्रसिद्धाऽस्तीति निरूपितम् ।

तथा च सरयूपारीणसभायाः सभापतिनेदं स्वीकृतमपि—'यद्यप्यस्माकं ब्राह्मणसमुदायेषु सपादलक्षसंख्याकाः कृत्रिमाः ब्राह्मणाः सम्मिलिताः सन्ति । इतिहासप्रमाणव्यवहारादिदृष्टचा सत्यमप्येतद्भवतु नाम । तथाप्येतेषामस्मत्समुदायात् बहिर्निःसारणमनर्थायैव भविष्यति । अतस्तेषां हृदयेषु 'धाकडाः' अर्थात् नीचाः कृत्रिमा इमे सन्तीत्याद्यभद्रशब्दप्रयोगेण दुःखलज्जादिसमुत्पादो भवत्कर्तृकः सर्वथाऽनुचित एवास्तीति मन्ये । यदा भवन्तस्तानुद्दिश्य किमपि गालीप्रदानादिकं करिष्यन्ति, तदा तेऽपि 'कृते च प्रतिकर्तव्यमि' ति न्यायेन भवत्स्वपि कानपि दोषान् समारोप्य भवन्निन्दादिकं विधास्यन्तीति । अतो ये बहुकालात् द्विवेदि-(दूबे) त्रिवेदि-(तिवारी) उपाध्याय-मिश्र-दीक्षित-अवस्थी-पाठकेत्याद्युपसंज्ञाभिः प्रसिद्धाः सन्तोऽस्मत्समुदायेषु सम्मिलिताः बभूवुः, ते तथैव तिष्ठन्तु ।' इति ( वर्णव्यवस्था—

मा० श्रा० भा० १ पृष्ठ २८५ ) एवं मैथिलब्राह्मणसमुदाये-ष्वपि मलिच्छामय-सतलखे-वाटधानय-सुग्ररिवार-प्रभृतिसंज्ञाभिः प्रसिद्धा अपि तादृशाः एव सन्तीति सरयूपारीणसंहितायाः १२-१३ पृष्ठयोः वर्णितम् । तथा चेदं स्पष्टतोऽवगम्यते—तत्तत्समये तदानींतनाः धर्मप्रियाः राजानो धर्माचार्याः महात्मानोऽपि यथायोग्यं निम्नोन्नतवर्णपरिवर्तनं विदधुरिति । अत एव भगवद्रामानुजाचार्य्योऽपि स्वश्रीसंप्रदाये ब्राह्मणवृन्दाभिवृद्धये सूत्रेभ्यः पटानिव, सुवर्णेभ्यश्चाभरणानीवोपादानकारणेभ्योऽब्राह्मणेभ्यो ब्राह्मणान् निर्ममे । अत एव तेषां गोत्राणि सांप्रतमपि नालिकेरवृक्षस्यारोहावरोहकर्मविशिष्टानि विद्यन्ते इति, यत्र तत्र वर्णितमुपलभ्यते ।

### जन्मकृतगुणकर्मकृतवर्णव्यवस्थयोः का युक्तियुक्ता ?

अतएव नेयं ब्राह्मणादिवर्णव्यवस्था केवलजन्मकृता स्वाभाविकी भवितुमर्हति, किन्तु गुणकर्मकृतैव, शास्त्रसमाजोपनिबद्धा च भवितुमर्हति । यदि हीयं वर्णव्यवस्था केवलजन्मकृतैव स्यात्, अवश्यं तर्हि भारतनिर्विशेषं सर्वेष्वपि युरोपादिदेशेष्वपि समुपलभ्येत । न खलु भगवता सर्वेश्वरेणादिपुरुषेण भारतीया एव समुत्पादिताः, न त्वन्यदेशीयाः, इति केनचिद् वक्तुं शक्यते । कदाचित् कथितमपि समीक्षाप्रवीणैः कथमपि संगततया प्रतिपत्तुं न शक्यते । यदि तु भारतीया इव निखिला अन्यदेशीया अपि भगवतैवोत्पादिताः स्युस्तर्हि मुखबाह्वाद्यन्यतमजन्ये जन्मतः सिद्धेऽन्यतमे वर्णे एव ते प्रवेश्याः भवेयुः । न तु तत्र तत्तथोपलभ्यते ।

अस्माकं धर्मशास्त्राण्यपि ह्यस्माकमार्यदेश एव तत्तद्वर्णधर्मान् जन्मत एव तत्तद्वर्णविभागांश्च बोधयन्ति, न तु सर्वेषु देशेषु ।

यद्युच्येत, ते सर्वेऽपि देशाः म्लेच्छदेशाः असंस्कृताश्च सन्तीति। तदा तु भारतीयैः—अत्रत्यैः विविधविज्ञानस्य, विविधसैनिक सामग्र्याः, प्रचुरास्त्रयन्त्रादिकलापस्य च लाभाय कथमपि तेषां म्लेच्छानां मुखानि नावलोक्येत ?। व्यापारादौ भारतीयापेक्षया तेषां प्रामाणिकत्वस्याधिक्यं सर्वैरप्यत्रत्यैरभ्युपगम्यत एव।

यदि गुणकर्मानुरोधिनी शास्त्रसमाजकृता च वर्णव्यवस्थाऽभ्युपगम्येत ? तदा देशान्तरेष्वपि तन्निबन्धना वर्णव्यवस्थाऽस्माभिरपि द्रष्टुं शक्येत। यतस्तत्रापि वैज्ञानिकानां, शिक्षकाणां, विविधग्रन्थलेखकानां विदुषां, शूरवीराणां स्वदेशभक्तानां सैनिकानां, उद्योगधनपतीनां प्रामाणिकानां व्यापारिणां, श्रमसमुपेतसेवकानाञ्च विभागस्य सुप्रथिततरा समुपलब्धिरस्त्येव। तथा च गुणकर्मानुरोधिन्येव वर्णव्यवस्था सर्वाभ्युदयसाधिकाऽस्ति, न केवलजन्मकृतेति वयं युक्तियुक्तमुत्पश्यामः।

अत एवोक्तं शिष्टैर्निष्पक्षविद्वद्भिरपि—'गुणकर्मविहीनेन जन्मना नास्ति वर्णता। जातिशेषस्य पुंसः स्याद् वृत्त्या वर्णविपर्ययः॥ प्राग्व्यवस्थाप्यते वर्णः शमाद्यैर्गुणकर्मभिः। पश्चात् अध्ययनाद्यैस्तु वर्णाचारैः प्रयुज्यते॥ वृत्त्या निर्णीयते वर्णो वृत्त्यैव, विनियम्यते। वृत्त्या संगृह्यते लोकस्तस्माद्वृत्तिर्गरीयसी॥' (मा० भा०) इति। वृत्तिः=तत्तद्गुणकर्मविशिष्टशिक्षारक्षणकृष्यादिरूपा जीविका।

अतस्तदुक्तमपि—'तत्तद्वर्णविभागोऽयं लोके (सर्वस्मिन् देशेयुरोपामरीकादावपि) जयति सर्वदा। देशकालादिभेदेन नामरूपान्तरात्मना॥ नृणां शिक्षा च रक्षा च कृष्यादिश्च सहायता। यावदावश्यकी लोके, तावद्वर्णव्यवस्थितिः॥ अद्यत्वेऽपि जयत्येषा सर्वदेशनिवासिषु। शिक्षा-शासन-कृष्यादि-श्रमकर्म-

विभागशः ।।' गुणकर्मानुसारेण म्लेच्छा आर्याश्च मानवाः । सर्वदेशेषु सन्त्येव संभवेयुश्च सर्वदा ।। न कोऽप्यार्योऽथवाऽनार्यो जन्मनेह प्रजायते । एतदेव मनुः प्राह, पुमान् आर्यो भवेद् गुणैः ।। तस्मादार्यमनार्यं वा कर्मभिः स्वैर्विभावयेत् । न जात्या न च रङ्गेन नोच्चनासादिदर्शनैः ।।' (मा० भा०) इति ।

## वर्णपरिवर्तने विविधानि प्रयोजककारणानि

निकृष्टवर्णात् उत्कृष्टवर्णलाभे नैकं तपोलक्षणमेव प्रयोजकं कारणं मन्तव्यमपि तु सन्ति विविधानि प्राग्प्रदर्शितानि कारणानि । यथाहि–'ब्रह्मणो मानसाः पुत्राः जन्मतो ब्राह्मणा मताः ।' सनकादयो जन्मत एव सात्त्विकाः, सत्त्वगुणप्रभवज्ञान-भक्तिवैराग्यादिसाधनसंपन्नाः ब्रह्मभावोपेताः श्रेष्ठाः ब्राह्मणाः संमताः इत्यर्थः । 'संस्कारेण भरद्वाजजाबालाद्या द्विजीकृताः ।' अनृतादिदोषनिवृत्तिपूर्वक — सत्यब्रह्मचर्यादिगुणाधानलक्षणेन संस्कारेण ब्राह्मणाः संवृत्ताः इत्यर्थः । 'विश्वामित्रादयः केचित् ब्राह्मण्यं तपसा गताः । विद्यया चेतरापत्य-काक्षीवद्-कवषादयः ।। वृत्तै ऋषभपुत्राद्याः ।' वृत्तैः=सदाचारपरोपकार-यज्ञदानादिभिः शुभकर्मभिरित्यर्थः । 'कर्मविशुद्धाः ब्राह्मणाः बभूवुः' (भागवते) 'भृग्वादिवरदानेन वीतहव्यादयस्तथा । लोकसंस्थानुमत्या (आर्यसमित्यनुमोदनेन) तु शाकद्वीपादिवासिन ।।' अत्यर्वाक्कालिकाः केचित् 'सवालक्खी' ति विश्रुताः । 'चित्तपावन' संज्ञाद्या राजाज्ञादिव्यवस्थया ।। ब्राह्मणब्रुवतां यातास्तथाऽऽन्ध्रद्राविडादयः ।।' आदिपदेन धर्माचार्यादिव्यवस्था ग्राह्या । 'व्रात्यस्तोमादिभिः शुद्धया बौद्धीभूता जनाः पुनः । संगृह्य शंकराचार्यैश्चातुर्वर्ण्ये प्रवेशिताः ।। रामानन्दादिभि म्लेच्छाः संस्कृत्य हैन्दवीकृताः ।' संस्कृत्य=वैष्णवसंस्कारोपेतान् कृत्वा । 'बाले-

याः शौनकाद्यास्तु भिन्नवृत्तिसमाश्रयात् । ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्चेति चतुर्विधाः ॥' विधर्मिणो विदेशीयाः शकाद्यास्तु प्रतिज्ञया । जन्मजातिपरावृत्तौ चातुर्वर्ण्यमुपागताः ॥' भिन्नवृत्तिसमाश्रयात्=भिन्न-भिन्न-शिक्षारक्षा-कृषिश्रमादिजीवननिर्वाहसाधनानामाश्रयात् । प्रतिज्ञया=दृढशपथेन 'वयं ब्राह्मणादयः तत्तद्गुणकर्मादीनां ग्रहणं कृत्वा भवाम इति ।' ब्राह्मणव्यक्तिजातेऽपि ब्रह्मकर्म न चेद् भवेत् । ब्राह्मणो न स सल्लोकैः, शास्त्रै र्वा मन्यते नरः ॥' जन्मतो जातिवादेऽपि, वर्णत्वस्य नियामकं । तत्तत्कर्मगुणादि हि ज्ञेयं सर्वोदयार्थिभिः ॥' इति ।

एवमुत्कृष्टवर्णात् निकृष्टवर्णप्राप्तावपि दुष्कर्मादीनि विविधानि सन्ति कारणानि । यथा—'विश्वामित्रस्य शापाद्धि तत्पुत्राः म्लेच्छतां गताः ।' बहवो वैश्वामित्राः मधुच्छन्दःप्रभृतयो वेदमन्त्रद्रष्टारो ब्रह्मवंशकर्तारो ब्राह्मणाः संजाताः, परन्तु केषांचित् पुत्राणां दुराचारादिदुष्टकर्मदर्शनात् विश्वामित्रेण तेभ्यः शापो दत्तः यूयं 'म्लेच्छा भवत दुर्जनाः ।' इति । 'यदोस्तु यादवाः जाताः, तुर्वशोर्यवनाः स्मृताः । द्रुह्योः सुतास्तु वै भोजाः, अनोस्तु म्लेच्छजातयः ॥' शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं(शूद्रत्वं)गता लोके ब्राह्मणादर्शनेन च ॥' क्रियालोपात्=गायत्रीजपादिशुभकर्मणामभावात्,यथार्थब्राह्मणानां सद्धर्मशिक्षकाणां संस्कर्तृणां-विद्याविनयोपेतानां अदर्शनात्=अभावात्-असान्निध्यात्-अप्रापणात्-अनुपासनात्, ततः तासां जातीनां सद्विद्या-सदाचारभ्रंशात्, ताः जातयः वृषलत्वं गताः । 'एवं निजवर्णधर्मपरित्यागाद ब्राह्मणैश्च परित्यक्ताः म्लेच्छतां ययुः ।' ( विष्णु पुराणे २।८ ) एवं यवनाङ्गलादिशासनसमये भयाद्वा, लोभाद्वा, बलात्काराद्वा, उत्तमवर्णप्रयुक्तोपेक्षणापमान-

तिरस्कारादितो वाऽऽर्यभावशिक्षणाभावाद्वा विविधकारणादपि आर्यसन्ताना: दशकोट्यधिका: प्रिये भारते एवानार्यतां म्लेच्छतां गता इति प्रत्यक्षमेतत् ।

## गुणकर्मविशिष्टयोनिवाद:

केचनैवं वदन्ति–

'तपः श्रुतञ्च योनिश्च, ह्येतद् ब्राह्मणकारकम् । तपः-श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः । त्रीणि यस्यावदातानि, योनिर्विद्या च कर्म च । एतदेव विजानीहि, ब्राह्मणाग्र्यस्य लक्षणम् ॥' ( व्याकरण-महाभाष्ये-पतञ्जलिमुनयः ) 'जन्मशारीरविद्याभिः आचारेण श्रुतेन च । धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥ चित्रकर्म यथाऽनेकैः रङ्गैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः॥'(पराशरमाधवीये ८।१६। अङ्गिरस उक्तिः)।शारीरः=शरीरकान्त्यादिः'सुक्षेत्राच्च सुबीजाच्च, श्रेष्ठो भवति संभवः । अतोऽन्यतरतो हीनादवरो नाम जायते ॥' इति । श्रुतं=वेदादिसच्छास्त्रविद्या, तपः= पूर्वोक्तं, स्ववर्णाश्रमधर्मपरिपालनं वा, योनिः=ब्राह्मणादेव ब्राह्मण्यामेव; समुत्पत्ति; अवदातानि=विशुद्धानि । योनौ अवदातत्वं-ब्राह्मणलक्षणोपेतमातापितृजन्यत्वम् । जननीजनकयोरुभययोरपि अवदातत्वमपेक्षणीयमेव । तच्च शरीरसौष्ठवगौरादिवर्ण-बल-स्वास्थ्य-सदाचार-बुद्धिमत्त्वादिकम् । यथा गोर्गवेन्द्रस्य चोभययोरपि सौष्ठवात्, तज्जन्यस्य वत्सस्यापि सौष्ठवं संजायते, तथा मनुजेष्वपि प्रत्येतव्यम् । उक्तं च 'यदा सत्पितरौ स्यातां सत्त्वादिगुणशालिनौ । तदा तत्सन्ततिः प्रायः, स्यात्सत्त्वादिगुणाधिकाः ॥' इति यद्वा योनिः इह न जातिः, किन्तु विशुद्धसन्तानाधिजनन विशिष्टभूमिः सती माता,

यत्रेदमुक्तं—'मातुरग्रेऽधिजननम्' (मनु० स्मृ० २।१६६) इति। विद्याकर्मणोः अवदातत्वं=कामक्रोधदंभमात्सर्यादिदोषरहितत्वम्। यस्य किल त्रीणि विद्यादीनि निर्मलानि सन्ति, स एव मुख्यो ब्राह्मणो वेदितव्यः। तेषु त्रिषु द्वाभ्यां हीनस्य, एकस्माद्वा हीनस्य गौणमेव ब्राह्मणत्वं प्रत्येतव्यमित्यर्थः।

अत एव जात्या व्यवहारतश्च ब्राह्मणत्वेऽपि गुणकर्मवैषम्याद् देवादिरूपेण बहवो ब्राह्मणाः अत्रिस्मृतौ इत्थं प्रतिपाद्यन्ते। यथाहि—'संध्या स्नानं जपो होम, देवतानित्यपूजनम्। आतिथ्यं वैश्वदेवञ्च देवब्राह्मण उच्यते।। देवः=भूदेवत्वविशिष्ट इत्यर्थः। 'शाके पत्रे फले मूले, वनवासे सदा रतः। निरतोऽहरहो भक्तौ स विप्रो मुनिरुच्यते।। शाकाद्याहारकर्तृतया संयमित्वं, एकान्तवासशीलतया, भगवद्भक्तौ निरततया च तस्य विप्रस्य मुनित्वमित्यर्थः। 'वेदान्तं पठते नित्यं, सर्वसङ्गं परित्यजेत्। सांख्ययोगविचारस्थः, स विप्रो द्विज उच्यते।।' धैर्यशौर्यबलोपेतो राष्ट्ररक्षासमुद्यतः। संग्रामे विजयी यः स्यात्, स विप्रः क्षत्र उच्यते।। कृषिकर्मरतो यश्च, गवाञ्च परिपालकः। वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते।। कैंकर्यवृत्तिमान् यश्च, विक्रेता क्षीरसर्पिषाम्। दम्भपाखण्डसंयुक्तः, स विप्रः शूद्र उच्यते।। चोरश्च तस्करश्चैव,पिशुनो दुःखदस्तथा। मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते।। ब्रह्मतत्त्वं न जानाति, ब्रह्मसूत्रेण गर्वितः। तेनैव स च पापेन, विप्रः पशुरुदाहृतः।। दुराचाररतो नित्यं विरुद्धं बहुभाषते। धूर्तः क्रूरः शठश्चैव, स विप्रो म्लेच्छ उच्यते।। क्रियाहीनश्च मूर्खश्च, सर्वधर्मविवर्जितः। निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते।।' (अत्रि स्मृतिः—३७३ इत्यारभ्य ३८३ पर्यन्तम्) इति। तथा च लौकिकव्यवहारे

जात्या ब्राह्मणत्वेनाभिधीयमानोऽपि शुभाशुभगुणकर्मणां वैषम्यात् इत्थमुत्तमाधमभावेन शास्त्रैः प्रतिपाद्यते ।

अत एव तत्तद्गुणोत्कर्षेण तत्तत्संज्ञोत्कर्षोऽपि बौधायनगृह्य-सूत्रेऽपि प्रथमप्रश्ने अ० ७ । सू० १-८ इत्यत्र प्रतिपादितो यथा— 'ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनात् 'जातः' इत्यभिधीयते । उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य 'ब्राह्मणः' । एकां शाखामधीत्य 'श्रोत्रियः' । अङ्गाध्यायी 'अनूचानः' । कल्पाध्यायी 'ऋषिकल्पः' । सूत्रप्रवचनाध्यायी 'भ्रूणः' । चतुर्वेदाध्ययनाद् ऋषिः, अत उर्ध्वं 'भूदेवः' इति ।

यद्यपि—जन्ममात्रेण नास्ति कस्यापि श्रेष्ठता, परन्तु शुभगुणकर्मभिरेवेत्यस्ति निश्चितः शास्त्रसिद्धान्तः । यदाहुः-पौराणिका अपि—'शूद्रोऽपि शीलसंपन्नो ब्राह्मणादधिको भवेत् । ब्राह्मणो विगताचारः शूद्राद् हीनतरो भवेत् ।।' (भ० पु० १ । ४४।३१) इति । तथापि ममत्वादिप्राधान्यात् अधमगुणकर्मविशिष्टोऽपि स्वपुत्रो नहि केनापि परित्यज्यते, व्यवहारविरुद्धत्वात् उत्तमगुणकर्मविशिष्टोऽप्यन्यपुत्रः स्वगृहे नहि समानीयते । एवं विवाहादिव्यवहारोऽपि जन्मजातिप्राधान्यमेवाभिलक्ष्य प्रायः प्रवर्तमानो भवति, कुत्रचिदभिनवसंस्कारवशादपवादोऽपि लक्ष्यते ।

यद्यपि अस्मिन् समये शिक्षायास्तत्तद्व्यवसायादिकर्मणश्च समानत्वेन हेतुना जातिकृतवर्णविभागस्यावस्थितिर्दुर्लभा प्रतीयते । यतो वर्णविभागस्य प्रयोजकोऽस्ति—शिक्षाभेदः कर्मभेदश्च । बुद्धिः शिक्षाकर्मानुसारिण्येव भवतीत्यस्ति नियमः । आंगलविद्यालये स्कूले कालेजे च वर्तमानानां ब्राह्मणत्वादिजातिभिः पृथक्तया व्यवह्रियमाणानामपि छात्रछात्राणामेकत्र

मिलित्वा पाश्चात्यभाषाग्रन्थादिकमधीयानानां, समाननामवेषभूषादि धारयमाणानां, होटलादौ समानविधया भोजनादिकं कुर्वाणानां, सिनेमादौ च तत्तदश्लीलदर्शनश्रवणतत्पराणामुच्छृङ्खलवैदेशिकोपन्यासादिकमतिरुच्या पठनशीलानां पाश्चात्यभाषारीतिनीतिभोजनादिव्यवहारेऽच्छबुद्धिं धारयमाणानां परस्परं मैत्रीभावनया विवाहग्रन्थ्या च युज्यमानानां मध्ये वर्णविभागः प्रत्यक्षतो दृश्यमानो न भवति, यतस्तद्विभागप्रयोजककारणानां सर्वथा विनष्टप्रायस्त्वात्, तथापि—'अयञ्च युगधर्मो हि वर्तते कस्य दूषणम् ।' ( भाग० मा० ) इति न्यायेन भगवदुपवनसदृशेऽस्मिन् स्वतन्त्रे भारतराष्ट्रे भगवत्प्रेरणया यद्भवति, तत्प्रतिरोद्धुं कः शक्नुयादिति विचार्य शिष्टाः मौनमेव भजन्तीत्यलमतिपल्लवितेन ।

## एकत्र चातुर्वर्ण्यवादः

केचन साम्यवादभावनाभावितहृदया नव्यास्तु विराट्पुरुषस्य मुखादिरूपेण ब्राह्मणाद्यवस्थानकथनमिदं लुप्तोपमरूपकालंकारभाषया भूषितमेवास्तीति मत्त्वा 'ब्राह्मणोऽस्य मुखमासीदि' त्यस्य मन्त्रस्य साम्यवादसिद्धय इत्थं व्याख्यानं कुर्वन्तः स्वाभिप्रायं प्रकटयन्ति । तद्यथा-विराट्पुरुषस्य मुखं किं वस्तु आसीत् ? ब्राह्मणो मुखमासीत् । बाहुः किमासीत् ? क्षत्रियो बाहुरासीत् । ऊरुः किमासीत् ? वैश्य ऊरुः=मध्यभाग आसीत् 'मध्यं तदस्य यद्वैश्यः' ( अथर्व० सं० ) इति श्रुत्यन्तरात् । पादः× किमासीत् ? शूद्रः पाद आसीत् । इति प्रश्नोत्तराभ्यामिदमवगम्यते । यथा समष्टिदेहब्रह्माण्डात्मा विराट् पुरुषो ब्राह्मणादिलक्षणमुखादिचतुष्टयावयवैरविच्छिन्नैः

×किमिति सामान्यरूपत्वात् नपुंसकलिंगता, सामान्ये नपुं-

समुपेतो भवन् पूर्णो भवति, तथा 'यद्ब्रह्माण्डे तत्पिण्डे' इति न्यायप्रामाण्यात्÷ व्यष्टिदेह-पिण्डात्मा मानवपुरुषोऽपि स्वकीयेषु मुखादिष्वविच्छिन्नाङ्गेषु ब्राह्मणत्वादिप्रयोजकविद्यादिशक्तीः समवाप्यैव पूर्णतामुपैति। यथा च विश्वरूपस्य भगवतो ब्रह्माण्डमूर्तेः समष्टिशरीरे संयुक्ततया विज्ञानपराक्रमैश्वर्यादिविशिष्टशक्तयः स्वभावतो विद्यन्ते। तथैव तदंशभूते पिण्डदेहोपाधिकेऽप्यस्मिन् मनुष्ये चतस्र इमा विद्याबलादिरूपा विशिष्टशक्तयः प्राधान्येनाविच्छिन्नानि चत्वार्यङ्गान्याश्रित्याभिवर्तन्ते। शिरसि मुखे च ज्ञानादिशक्तिः, वक्षसि बाह्वोश्च बलपराक्रमादिशक्तिः, उदरे मध्यभागे संग्रहवितरणादिशक्तिः, पादयोश्च परिचर्याश्रमादिशक्तिः। अत एव ज्ञानेन्द्रियाणि च प्रायेण शिरोभागमेवाश्रयन्ति। दुर्बले च शिरसि ज्ञानादिशक्तिरपि दुर्बला भवति, ब्रह्मचर्यशिक्षणाभ्यासचित्तैकाग्र्यादिसाधनैः संजाते सबले शिरसि सबला ज्ञानशक्तिर्विकसिता भवति। एवं बलपराक्रमादिप्रयोगोऽपि+

---

सकलिङ्गत्वदर्शनात्।÷ 'ब्रह्माण्डपिण्डे सदृशे, ब्रह्मप्रकृतिसम्भवात्। समष्टिव्यष्टिसम्बन्धादेकसम्बन्धगुम्फिते॥ पिण्डज्ञानेन ब्रह्माण्डज्ञानं भवतीति निश्चितम्। एवं ब्रह्माण्डबोधेन पिण्डस्तदुपमान्वितः॥' इति।

+भुजद्वयलाभस्य फलं जानकीहरणकाव्येऽपि कुमारदासपण्डित इत्थं वदति—'पुरुषस्य कृतं भुजद्वयं प्रविधातुं द्वयमेव वेधसा। सुहृदामुदयञ्च विद्विषामवलेपप्रतिघातमेव च॥ शरणोपनतं न पाति यो, न भिनत्ति द्विषतां समुन्नतिम्। न स बाहुरसाधनक्षमो नरवृक्षप्रभवः प्ररोहकः॥' (४।३६-३७) इति। शत्रूणां धर्मराष्ट्रद्रोहिणां अवलेपस्य=गर्वस्य विध्वंसनमेव विधातुं

बाहुनिष्पाद्यो वक्षसि श्रान्ति जनयति। व्यायामपुष्टान्नभक्षणादिना दृढ़े बलिष्ठे वक्षसि सति बाहुसाध्यः पराक्रमोऽपि विकसितो भवति। एवं मध्ये स्थितमुदरञ्चैतद् बाह्यमन्नादिकं संगृह्य यथायोगं विभज्य तद्रसरूपेण सर्वशरीरावयवेषु प्रापयति। पादौ चाभीष्टदेशप्रापणादिरूपां श्रमसाध्यां सेवां कुरुत एवेति सर्वेषां सुविदितमेव। अत एव तासां स्वाङ्गेषु स्वभावतोऽवस्थितानां विज्ञानादिशक्तीनां विकासाय सर्वैरपि मानवैः प्रयत्नो विधेयः। एष एव पूर्णो मानवो भवितुमर्हति, यस्य किल शिरसि मुखे च ब्राह्मणत्वप्रयोजकप्रकृष्टविद्याशान्तिसंयमादिशक्तिः, बाह्वोर्वक्षसि च क्षत्रियत्वसम्पादकप्रभूतबलपराक्रमरक्षणादिशक्तिः, उदरे ऊर्वोश्च वैश्यत्वप्रयोजकवित्तार्जनसंग्रहणवितरणादिशक्तिः, पादयोश्च शूद्रत्वप्रयोजकसेवापरिश्रमादिशक्तिश्च विकसिता विद्यते। विद्यादिचतुष्टयशक्तिसंयुक्तः पूर्णः पुरुष एवाशेषाभ्युदयमासादयितुं शक्नोति, नान्यथा; अत एव सर्वेऽपि मानवाः विद्यां बलं धनं श्रमञ्चाभ्यर्थयमानास्तत्कृते प्रयतमानाश्च दृश्यन्ते। सर्वोऽपि मानवःस्वभावत एव स्वस्मिन् महत्त्वं संभावयत्येव, तद्येनोपायेन सिद्धं भवेत्, तेनैवायं तदर्थं प्रयतत एव। विचारेण शास्त्राद्युपदेशेन वा तस्योपायभूता विद्याबलधनादिशक्तीः परिपश्यति। अत एव तासामेकत्र समुच्चयमेवाभीप्सितार्थसाधकत्वेनाभिप्रैति। यतस्तास्वन्यतमविहीनेन नाशेषमभ्युदयमवाप्तुं शक्यते। तद्यथा-बलधनादिमन्तरा केवलया विद्यया स्वपररक्षणदेशस्वातन्त्र्यस्वधर्मरक्षणशत्रुपराजयादिकं कर्तुं न पार्यते, अतो विद्यया

---

ब्रह्मणा भुजद्वयं कृतम्। प्ररोहकः=शाखालक्षणः। बलपराक्रमादिरहितो बाहुरेव न भवतीत्यर्थः।

साकं बलादिकमपेक्षणीयमेव। एवं विद्याधनादिकं विना केवलेन बलेनानर्थप्रदादुन्मार्गान्न निवर्तितुं शक्यते, अतो बलेन सार्द्धं विद्यादिकमपि प्राप्तव्यमेव। एवं धनादिकं विना विद्याबलाभ्यां केवलाभ्यां जीवननिर्वाहराष्ट्राभ्युदयादिकं कर्तुं न शक्यते, एवं परिश्रमहीनाः यन्त्रकलाप्रावीण्यरहिताश्च विद्याबलधनवन्तोऽपि अलसाः प्रमादिन एव भवेयुः, धनधान्यादिकञ्च समवाप्तुं कथं शक्नुयुरिति? । अत एव तत्तद्विना तत्तदशेषेष्टसाधनायापर्याप्तमवगन्तव्यम्। तस्मात् चातुर्वर्ण्यस्य मनुष्यस्वभावेषु निहितत्वात, सर्वोऽपि मानवः चतुर्वर्ण एव भवन् विद्याबलधनश्रमादिलक्षणाः चतुष्टयशक्तीः समवाप्य पूर्णः सकलाभ्युदयवान् भवतीति सिद्धम्।

तथा च सर्वैरपि मानवैः स्वनिष्ठपूर्णमानवतालाभाय सकलाभ्युदयसुखसमवाप्तये च विविधां विद्यां स्वपरहितसाधकं शुभाचरणं क्षमादयासंयमादिसद्गुणांश्च समवाप्याहं ब्राह्मणो भविष्यामि, एवं शारीरादिबलशौर्यपराक्रमादिकं समवाप्याहं क्षत्रियो भविष्यामि, एवं जीवननिर्वाहराष्ट्राभ्युदयसाधकधनधान्यैश्वर्यौदार्यादिकञ्च समवाप्याहं वैश्यो भविष्यामि, एवं परिश्रमसेवायन्त्रकलानैपुण्यादिकं समवाप्याहं शूद्रो भविष्यामीति विभावनीयम्। यतो विराट्-पुरुषस्य मुखादयोऽवयवास्तच्छक्तयश्च नहि विच्छिन्नाः सन्ति, न च मानवेऽपि मुखादयोऽवयवास्तच्छक्तयश्च विच्छिन्नाः पृथक्भूता उपलभ्यन्ते। तथा चैकस्याविच्छिन्नाङ्गेषु वर्तमानानां विद्याबलादिशक्तीनां समुच्चयोऽवश्यमेव करणीयः पूर्णतालाभाय। यथा चैकस्मिन् शरीरेऽवस्थितानां ज्ञानकर्मेन्द्रियाणां सर्वासां

शक्तीनां समुच्चयः सर्वविधाभ्युदयसाधकोऽवलोक्यते, तथा प्रकृतेऽप्यवगन्तव्यम् ।

अत एवैकत्र चातुर्वर्ण्यवादविषये भगवतः पूर्णपुरुषोत्तमस्य श्रीकृष्णस्य श्रद्धेयं समुदात्तं लोकहितकरं चरितमपि प्रमाणम् । तत्र हि समुदारशीले भगवति स्पष्टतया चातुर्वर्ण्यसमन्वयो दृश्यते । निखिलोपनिषत्सारभूतगीताज्ञानोपदेशकर्तृत्वेन जगद्गुरुत्वेन च प्रशस्तं ब्राह्मण्यं, बलशौर्यधैर्यादिशालित्वेन युद्धादिकर्तृत्वेन च समुदारं क्षत्रियत्वं, वैश्यप्रवरनन्दगृहावास-गोरक्षण-गोवर्धनक्षेत्रसमृद्धिकर्तृत्वेन गोपालसंज्ञाधारकत्वेन च पुण्यं वैश्यत्वं, अमानित्वमानदत्वाभ्यां× विजयहयतनुमार्जन-रथसञ्चालनादिश्रमकर्तृत्वेन युधिष्ठिरराजसूययज्ञे समागतमहापुरुषपादप्रक्षालनादिकर्तृत्वेन च मानार्हं शूद्रत्वं च एकस्मिन्नेव श्रीकृष्णे भगवति शास्त्रवचोभिर्निरूपितं, सर्वैरपि तदानींतनैरवलोकितञ्च बभूव । सति चैवं यथा–अंशिभूते पितरि यद्यद् दृष्टं रूपाकृतिस्वभावकर्मधनादिकं तदंशभूतेषु पुत्रेष्वपि समानतयाऽभ्युपगम्यते, तथैव तस्यैवामृतस्य+ भगवतोंऽशिनो यद्यद् दृष्टं तत्तत्सर्वमविरुद्धं तत्प्रकटांशभूतेषु भारतविशिष्टमानवेष्वपि निखिलाभ्युदयकामैः सर्वोदयवादिभिरभ्युपगन्तव्यम् ।

अपि च पूर्वोक्तस्य 'ब्राह्मणोऽस्य मुखमासीदि' त्यस्य युक्तिसंगत एवायमर्थः, अन्यथा मनुष्यसदृशस्य परमात्मनो मुखाद्यवयवेभ्यो ब्राह्मणादिसृष्टिरियं प्रादुर्भूतेति सर्वथा विज्ञानविरुद्ध-

---

×'अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।' इति विष्णुसहस्रनामप्रामाण्यात् ।

+'शृण्वन्तु विश्वे अमृतस्य पुत्राः' ( यजु० ११।४ ) इति श्रुतिप्रामाण्यात् । विश्वे=सर्वे अमृतस्य=परमेश्वरस्येत्यर्थः ।

मसंभावितमर्थं बुद्धिमान् कः श्रद्दधीतः ?। 'अपाणिपादः' ( श्वे० उ० ३।१९ ) 'अचक्षुःश्रोत्रं' ( मु० उ० १।१।६ ) इत्यादिभिः श्रुतिभिः स्पष्टं परमात्मनो विश्वव्यापकस्य निराकारस्यानवयवमेकरूपं प्रतिपाद्यते । किञ्च परमेश्वरमेव विश्वकर्तारमनभ्युपगच्छद्भिः सांख्यमीमांसकादिभि र्वैदिकैः श्रुतेरस्याः परमेश्वरमुखादिभ्यो ब्राह्मणाद्युत्पत्तिरूपोऽर्थः कथं स्वीकृतः स्यात् ? तस्मात् पूर्वोक्त एव एकत्र वर्णचतुष्टयसमुच्चयबोधकतात्पर्यार्थ एव तैरप्यवश्यमङ्गीकरणीयः ।

ननु—कर्मसंस्कारादिवैचित्र्यात् न हि सर्वे सर्वशक्तिमन्तो भवितुमर्हन्ति इति चेत् बाढम्, तत्तदभीप्सितविद्याबलादिलाभस्य कर्माद्यायत्तत्वे लौकिकप्रयत्नवत् प्रयत्नस्तु तदासादयितुं कर्तव्य एव । 'यत्ने कृते यदि न सिद्धयति, तदा तस्यापराधो मन्तव्यः । समाने प्रयत्ने कृतेऽपि तत्तद्व्यक्तेः न्यूनाधिकलाभादौ प्रयोजकरूपेण प्रारब्धयोगादिकं मन्तव्यम्, किन्तु प्रयत्नस्य सर्वथाऽभावे सति कस्यापि कीदृशो लाभः संभवेदेव ? इति विचार्यम् ।

अपि च मानवतोचित-सर्वाभिलषित-तत्तच्छक्तिसंपादनेऽमुकव्यक्तिसमुदायस्य नास्त्यधिकार इत्येवंरूपः प्रतिरोधः कथमपि केनापि कुत्रापि न विधेयः, यतो 'नायोग्यः पुरुषः कश्चित् प्रयोक्तैव सुदुर्लभः ।' इत्युक्तत्वादिति । मानवताविकासे क्रियमाणः प्रतिबन्धः पापायैव प्रभवति, न पुण्याय । अर्थित्वस्य सर्वत्र तुल्यत्वात् ।

ननु—एवं सर्वसाम्ये सति चातुर्वर्ण्यविभागः प्रलयं गमिष्यति इति चेत्, इष्टापत्तेः, यतस्तद्विभाग एव महानर्थकरः, विषमय्या उत्तमाधमभेदभावनाया बीजमपि स एव, यया किलार्य्यहिन्दुसमुदायः स्वसंघशक्तिमासादयितुं कथमपि न प्रभवति ।

ब्राह्मणत्वक्षत्रियत्वादिकल्पितभेदप्रयुक्तप्रभूतविग्रहवत्त्वाद्यनर्थत्वं वसिष्ठविश्वामित्रपरशुरामसहस्रबाह्वादौ पूर्वमपि दृष्टं, इदानीमपि द्राविडकडगम-महाराष्ट्रीयपेशवामराठादौ च दृश्यते। जातिभेदसंप्रदायभेदादिप्रयोजितसंघट्टनाभावादेव पूर्वं साम्प्रतञ्चार्यहिन्दुजातेस्तद्धर्मस्य तद्देशस्य च महती दुर्दशा स्मर्यते, विलोक्यते चास्माभिः सर्वैः। तदानींतना अन्येभ्यो विच्छिन्ना ब्राह्मणा इत्थं विचारयामासुः-'वयन्तु भिक्षुका विप्राः शास्त्रयजमानैकजीविनः शौर्यबलपराक्रमादिरहिताः राष्ट्रस्वातन्त्र्यतद्रक्षणादिकं कर्तुं कथं प्रभवामः? तत्र नास्त्यस्माकमधिकारः। भवतु यः कोऽपि महाराजः सम्राट् बादशाहः स्वराष्ट्रनियन्ता आर्यो वाऽनार्यो वा स्वदेशीयो वा विदेशीयो वा, वयन्तु तं भारतराष्ट्राध्यक्षं जगदीश्वरतुल्यतया विभावयामः, तत्स्तुतिभिश्च स्वमनोरथान् पूरयामः। अस्मदीयैः कविवरैरपि स एवं स्तुतः-'दिल्लीश्वरो वा, जगदीश्वरो वा, मनोरथान् पूरयितुं समर्थः। अन्यै र्नृपालैः परिदीयमानं, शाकाय वा स्यात् लवणाय वा स्यात् ॥' इति। तत्कालिकाः राजानः क्षत्रिया बलपराक्रमशालिनोऽपि विद्याविचारविवेकादिहीनतया स्वसंघट्टनशून्याः भोगविलासप्रियाः मिथः सुन्दरीकुमार्यादिः कृते कलहायमानाः युद्धं कुर्वाणाः स्वबलशक्ति विनाशयन्तश्च स्वराष्ट्रं विदेशीयम्लेच्छाधीनं विदधानाः तत्पारतन्त्र्यञ्च स्वीकुर्वाणाः स्वधर्मं स्वजातिमप्यधो विनिपातयामासुः। वैश्यास्तु कृषिवाणिज्यपशुपालनादितत्पराः वयं रंका वराकाः निर्बलाः स्मः, अतः राष्ट्ररक्षणे नास्त्यस्माकमधिकारः इति; शूद्रास्तु द्विजेभ्यः सर्वथा विच्छिन्ना दूरतोऽपसार्यमाणाः अत एव दीना हीनाः किंकराः किं कर्तुं शक्नुमः? इति च मन्वानाः स्वराष्ट्रपराङ्मुखाः आसन्। तत्तत्संप्रदायाचार्य्याः

विविधाः साधवः संन्यासिनस्तदानींतनाश्च ग्रन्थलेखकास्तु व्यक्तभगवद्रूपराष्ट्रस्वातन्त्र्यगौरवगीतलेखने पराङ्मुखाः सन्तः, अव्यक्तपरमेश्वरस्यैव चरित्रगीतं वर्णयमानाः तस्मिन्नेकस्मिन्नपि विविधनामविग्रहादिप्रयुक्तं भेदं कुर्वाणाः परस्परकलहैकबीजं खण्डनमण्डनलक्षणं संप्रदायभेदं भक्तसमुदायभेदञ्च विदधुः। तेषु केचन विविधसामर्थ्यशालिनो विविधचमत्कारप्रदर्शनतत्परा अपि, स्वप्रियभारतराष्ट्रस्य संघट्टनस्वातन्त्र्यादिस्थापने सर्वथा सामर्थ्यशून्या बभूवुः। तत्साधुसमाज एक एव साधुप्रवरः स्वनामधन्यः समर्थरामदासस्वामी समाक्रान्तराष्ट्रस्वातन्त्र्यप्रीतिहृदय आसीत्, येन किल छत्रपतिः शिवाजी राष्ट्रस्वातन्त्र्यलाभाय दुष्टम्लेच्छशासकविध्वंसाय हिन्दुजातिसंघट्टनाय च प्रबोधितः। क्षत्रियसमाजे च महाराणाप्रतापः राष्ट्रभक्त आसीत्, परन्तु संघट्टनसहायाभावात् सोऽपि न विशिष्टं कार्यं कर्तुं प्राभवत्।

तथा च पूर्णसंघट्टनाभावादेव कारणात् सामर्थ्यहीनं हिन्दुधर्मं परित्यज्य पवित्रतमे भारते राष्ट्रे दशकोटयधिका म्लेच्छाः प्रादुरभवन्। हिन्दुजातौ नीचत्वेन विभाव्यमानाः विशिष्टाधिकारेभ्यो बहिष्क्रियमाणाः सर्वथोपेक्ष्यमाणास्ते मुहम्मदेश्वादिशरणत्वासादनमन्तराऽन्यत्किं कुर्युः? अतस्ते संप्रत्यपि वैरायमाणाः विच्छिन्नायाः हिन्दुजातेः सुखमयीं निद्रामपि प्रणाशयन्ति। तैरेव पूर्वं सधर्मभिः संप्रति विधर्मभि हिन्दुस्थानं पावनमखण्डं भारतवर्षं पाकिस्तानादिरूपेण खण्डितमेव कृतमवलोक्यते। यत्र किलान्यधर्मावलम्बिभिर्बन्धुभावमाविष्कृत्य परमोदार्यपुरःसरं, अच्छाधिकारादिप्रदानेन परकीया अपि स्वकीया विधीयन्ते, तत्र परमसंकोचघृणाशीलैः कूपमण्डूकाय-

मानैः कतिभिश्चित् हिन्दुधर्मिभिर्दुःस्वार्थदुरभिमानमौढ्यादि-दोषेण स्वकीया अपि परकीया विधीयन्ते, किं सखेदमाश्चर्य-मितः परम् ।

अत एव दक्षिणभारते उत्तमवर्णाभिमानिभिः पण्डितैः वर्णाश्रमधर्मगौरवज्ञैरपीदं तदुच्छेदकं घण्टाघोषेण पठ्यते—'कलावाद्यन्तयोः स्थितिः' 'कलौ नो क्षत्रियाः सन्ति, कलौ नो वैश्यजातयः । ब्राह्मणाश्चैव शूद्राश्च, कलौ वर्णद्वयं स्मृतम् ॥' इति । तदेतत्पद्यं श्रुत्वा दृष्ट्वा च तेषां व्यवसायव्यवहारादिकं, केनचिन्मध्यस्थेनेदमपि पद्यं परिगीयते—'कलौ न ब्राह्मणाः सन्ति, कलौ न क्षत्रजातयः । वणिजश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम् ॥' इति । युक्तञ्चैतत्तैः प्रायशो वणिक्वृत्तिश्ववृत्ति-समादरणात् तत्त्वमिति । अन्यथा तपस्विनां विदुषां समदर्शिनां ब्राह्मणानां बलपराक्रमशालिनां प्रियराष्ट्रगौरवाणां क्षत्रियाणा-ञ्चावस्थाने सति देशपारतन्त्र्ययवनाक्रमणादिकं कथमव-तिष्ठेत् ? इति सुधियः पक्षपातं विहाय माध्यस्थ्यमवलम्ब्य सर्वस्मिन् भारते दृशौ च विस्फार्य विचारयन्तु ।

सर्वाभि विद्याबलधनादिशक्तिभिः समलंकृतः परमसुखपूर्णः सत्ययुगस्तदैवाऽऽयास्यति, यदाऽऽयंहिन्दुजातिः—एकवर्णत्वेन—एकधर्मत्वेन-एकेश्वरत्वेन—संप्रदायभेदशून्यत्वेन--उत्तमाधम--वर्ण-भेदभावनाशून्यत्वेन च विभूषिता संघट्टिता परस्परं निःस्वार्थ-प्रेमसूत्रसम्बद्धा विशालराष्ट्रहितसंरक्षणतत्परा च भविष्यति ।

अत एव ऋगादिचतुर्वेदसंहितासु कुत्रापि जातिभेदादेः प्रतिपादनं नोपलभ्यते । 'ब्राह्मणोऽस्य मुखमासीदि' त्यादिरयमेक एव मन्त्र आपाततो जातिभेदप्रतिपादकत्वेनावगम्यमानोऽस्माभिः

पुरस्तात् जातिभेदाभावपरत्वेनैकत्र चातुर्वर्ण्यशक्तिसमुच्चय-प्रतिपादनपरत्वेन च योजितः।

अपि च ब्राह्मणग्रन्थस्मृतिपुराणादिषु परिदृश्यमानः चातुर्वर्ण्यभेदो न जातिनिबन्धनोऽपि तु गुणकर्माद्युपाधिकृत एव। जातिस्तु भारतराष्ट्रस्थितानां मानवानामार्यहिन्दुत्वलक्षणा एकैव। भारते राष्ट्रे बलात् यवनक्रिश्चयनादिरूपेण परिणताः ये केऽपि स्युः, ते सर्वेऽपि वस्तुतः सन्ति आर्यहिन्दव एव। विचार्यतां तावत्-हिन्दुस्थानस्य पावनमृत्तिकाभि र्येषां शरीराणि विनिर्मितानि सन्ति, ते कथं न हिन्दवो भवेयुः ? वयन्तु तत्र हिन्दुत्वमेवोद्घोषयामः।

अपि च यथा गुणवत्त्वादिभिरुपाधिभिरेव द्रव्यादिप्रतीति-व्यवहारोपपत्तौ सत्यां नैयायिकैः कल्प्यमानद्रव्यत्वादिजात्यभ्युपगमो व्यर्थ एव सम्पद्यते। तथा तत्तद्गुणकर्मभिरेवोपाधिभिर्ब्राह्मणादिप्रतीतिव्यवहारोपपत्तौ सत्यां जातिवादिभिः कल्प्यमानब्राह्मणत्वादिजात्युपगमोऽपि निरर्थक एवावगन्तव्यः।

अत एवैतदभिसंधाय लोकस्थितिञ्च निरीक्ष्य महाभारते सर्वज्ञकल्पैः श्रीबादरायणमुनिभिः, नैषधीयचरित्रे श्रीहर्षमिश्राचार्यैश्चाभिहितम्—'जातिरत्र महासर्प ! मनुष्याणां महामते !। सांकर्यात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः।।' (म० भा० वनपर्वणि अ० ८०।३१) 'अनादाविह संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जातिपरिकल्पना।।' इति।

अपि च विद्याबलादिनिखिलशक्तीनां तरतमभावेनैकत्र समन्वयेऽपि, 'वैशेष्यात्तु तद्वादस्तद्वादः' (ब्र० सू०) इति न्यायेन यत्र किल विद्योत्कर्षो दृश्यते, तत्र शिक्षकत्वापरपर्यायस्य ब्राह्मणत्वस्य, यत्र खलु बलपराक्रमोत्कर्षोऽवलोक्यते, तत्र रक्षकत्वा-

परपर्यायस्य क्षत्रियत्वस्य, यत्र हि धनधान्योत्पादनादानप्रदानाद्युत्कर्षो निरीक्ष्यते, तत्र पोषकत्वापरपर्यायस्य वैश्यत्वस्य, यत्र च कलाकौशल्यश्रमसामर्थ्योत्कर्षोऽवगम्यते, तत्र किल सेवकत्वापरपर्यायस्य शूद्रत्वस्य च व्यपदेशो भवतु नाम, न तेन एकत्र चातुर्वर्ण्यवादस्य क्षतिः। यथा युरोपामरीकादिषु विदेशेषु विद्योत्कर्षवन्तः शिक्षकाः प्रोफेसराः भवन्ति, बलपराक्रमशालिनः रक्षकाः मिलिटरीजनाः भवन्ति, कृषिवाणिज्यपशुरक्षणादितत्पराः पोषकाः उद्योगपतयो भवन्ति, एवं श्रमजीविनः सेवकाः सन्तीत्येवं तत्तदुत्कृष्टगुणकर्मभिस्तत्तद्वर्गविभागाः व्यवहारायाभ्युपगम्यन्ते। न जन्मभिः, कल्पिततत्तज्जातिभिश्च विभागाः मन्यन्ते। तथाऽस्माभिरपि एकत्र चातुर्वर्ण्यवादिभिः मन्यन्ते। इत्यलं पल्लवितेन।

## वर्णद्वयवादः

केचन पुनर्वेदसमालोचकाः विद्वांसः—वेदस्य प्रामाणिकैर्वचनैर्वर्णद्वयवादमेव निरूपयन्ति। यथाहि—'उभौ वर्णावृषिरुग्रः पुपोष।' (ऋ० १।१७९।६) 'हत्वी दस्यून् प्रार्यं वर्णमावत्।' (ऋ० ३।३४।९) 'दासवर्णमधरं गुहाऽकः।' (ऋ० २।१२।४) इत्यादिवेदमन्त्रेषु द्वावेव वर्णौ—आर्यवर्णः दासवर्णश्च प्रतिपादितौ उपलभ्येते। अयमर्थः-उभौ=द्वावेव वर्णौ स्तः, ऋषिवर्णः, उग्रवर्णश्च, तौ पुपोष=पोषणं कृतवान्। दस्यून्=बाधकानसुरान् हत्वी=हत्वा, आर्यं वर्णं उत्तमं×-प्र—आवत्=अपालयत्, इन्द्र

×आर्यवर्णस्योत्तमत्वमपि शुभगुणकर्मकृतमेव वेदितव्यम्। अत एवोक्तं-व्यासस्मृतावपि-'ज्ञानी तुष्टश्च, शान्तश्च सत्यवादी जितेन्द्रियः। दाता दयालुर्नम्रश्च स्यादार्यो ह्यष्टभिर्गुणैः॥' वाल्मी-

इति कर्तृपदं शेषः। वेदेषु तावत् ब्राह्मणक्षत्रियादिशब्दानामुपलभ्यत्वेऽपि तैः साकं वर्णपदप्रयोगस्यानुपलभ्यमानत्वात् द्वावेव वर्णौ मन्तव्यौ। वर्णशब्दश्च जातिपर्यायः, आर्यवर्णः द्विजवर्णः-उत्तमवर्णः ऋषिवर्णः इति, दासवर्णो दस्युवर्णोऽनार्यवर्ण उग्रवर्ण इति चानर्थान्तरमर्थात् पर्याय एव प्रत्येतव्यः। तत्र-आर्यवर्णो गौरः-शुक्लः सित, दासवर्णोऽसितः कृष्ण इति सितासितवर्ण-भेदनिबन्धन एवादावभूद् वर्णद्वयविभागः इति ज्ञायते। वर्ण्यते-अवलोक्यत इति वर्णः-रंगविशेषः। कृष्णवर्णो द्विजो गौरवर्णश्च शूद्रः, उभावप्यनवदातयोनी इति विसृमरो लोकप्रवादोऽप्येतमर्थमुपष्टभ्नाति। ब्राह्मणादयः शब्दास्तु न वर्णशब्दाः, अपि तु उपाधिविशेषप्रतिपादकाः, वैद्यज्योतिषिन्यायाधीशादिशब्दवत्। सति चैवं क्वचित् पुराणादौ प्रयुज्यमानो वर्णशब्दश्चोपवर्णपरो द्रष्टव्यः। उपवर्णः-उपजातिः-उपाधिः इत्यनर्थान्तरम्। तत्र अनपायिनी यावदाश्रयभाविनी, समानप्रसवात्मिका च जातिः, आगमापायिनी न यावदाश्रयभाविनी चोपजातिरिति विशेषः। तथा चार्यदासशब्दावेव मनुष्यादिशब्दवत् जातिवाचकशब्दौ, न ब्राह्मणादयः शब्दाः, ते तु तत्तद्गुणकर्मप्रतिपादकाः शब्दाः, अत एव व्याकरणमहाभाष्ये पतञ्जलिमुनयो ब्राह्मणादिशब्दान् गुणप्रतिपादकशब्दत्वेनैव व्यवजह्रुरिति। पुरा खलु अत्रार्यावर्ते

किरामायणेऽपि श्रीरामस्यार्यत्वमीदृशं वर्णितम्—'आर्यः सर्वसमश्चायं सोमवत् प्रियदर्शनः। (बा० कां० १।१६) शब्दकल्पद्रुमकोशेऽपि—आर्यः, श्रेष्ठः, शान्तः, पूज्यः, उदारचरितः, न्यायपथावलम्बी, कर्तव्यकर्मानुष्ठाता, धर्मशीलः सदाचारी च। 'कर्तव्यमाचरन् कार्यं अकर्तव्यमनाचरन्। तिष्ठति शोभनाचारे स तु आर्य इति स्मृतः॥' इति।

ये नगरग्रामनिवासिनः सभ्यास्तेषामार्यत्वं, ये त्विहाऽवीतरागाः अपि अरण्याश्रिताः गिरिकन्दरादिवासिनोऽसभ्यास्तेषामनार्यत्वमित्येवं जातिद्वयं जन्मस्थानव्यवहारादिभेदतः पार्थक्येन वर्णनीयमासीत्। तथैवानार्याणामपि आर्यानुगतत्वाऽननुगतत्वभेदाद् द्वैविध्यं सम्पन्नम्। ये त्वनार्य्या अप्यार्याणामानुगत्यमालम्बिरे, त एव दासा, तद्विपरीतास्तु 'दस्यवः इति व्यपदिष्टाः, त एव च दासाः शूद्रा इति दस्यवस्तु म्लेच्छा इति चाऽऽख्याताः। इत्थमिह पञ्चवर्णा निष्पन्नाः, एताश्च पञ्च श्रेणयो मनुष्याणामेवेति मनुष्यशब्दपर्यायत्वमाप्तं 'पञ्चजनः' इति। तदेवमेषु पञ्चजनेषु गुणकर्मादिभेदत एव ब्राह्मणः क्षत्रियः वैश्य इति त्रय आर्याः, दासो दस्युश्चेति द्वावनार्याविति स्थितम्।

## एकवर्णवादः

अपरे तु वाजसनेयकब्राह्मण—बृहदारण्यकोपनिषत्तैत्तिरीयब्राह्मणमहाभारतभागवतवायुपुराणादिवचनेभ्यः सत्ययुगे एक एव ब्राह्मणवर्ण आसीत्, यस्यापरं नामधेयं अग्निवर्णः—हंसवर्णः—ऋषिवर्णः—आर्यवर्णः इति। तद्यथा—'ब्रह्म वा इदमग्र आसीद्, एकमेव तत्, तदेकं सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं, स नैव व्यभवत् स विशमसृजत, स नैव व्यभवत्,स शौद्रं वर्णमसृजत।' (शतपथब्राह्मण—बृ० उ० १।४।११)इति। अस्यायमर्थः—ब्रह्म=ब्राह्मणवर्णः, इदं=क्षत्रियादिजातं—संप्रति भिन्नरूपेण प्रतीयमानं, तत्सर्वं, अग्रे=सत्ययुगे, एकमेव तत् आसीत्, ब्राह्मणवर्णाभिन्नमासीत्, नासी त्तत्र क्षत्रादिवर्णभेदः। तत्-ब्रह्म न व्यभवत्=रक्षणयुद्धादिरूप विभूतिवत्कर्मणे नालं-न समर्थमासीदित्यर्थः। अतः श्रेयोरूपं=बलपराक्रमादिना प्रशस्तरूपं-क्षत्रं=क्षत्रिय, अत्यसृजत =अतिशयेनासृजत। ब्राह्मणधर्मशमदमादिपरायणाः वयं ब्राह्मणाः

राष्ट्रपरिपालनयुद्धादिषु न समर्थाः स्म इति विचार्य तदर्थं ब्राह्मणेभ्य एव क्षत्रियाः सृष्टाः, अर्थात् ब्राह्मणसमुदायेषु ये बलशौर्यपराक्रमादिविशिष्टत्वेनावलोकितास्ते क्षत्रियरूपेण निर्मिताः। अत एवोच्यते–'क्षत्रस्य योनिर्यद् ब्रह्म।' (बृ० उ० १।३।११) इति। क्षत्रियाणां स्वेभ्य एवोत्पादकाः निर्मातारो ब्राह्मणा एव सन्तीत्यर्थः। अत एव राजसूयाश्वमेधयज्ञे क्षत्रियं राजानं समुन्नतासने संस्थाप्याधःस्थिता विद्वांसो ब्राह्मणाः तं स्तुत्यादिभिः समुपासते, प्रियं पुत्रं प्रशस्तमिव पितरः स्नेहशीलाः इति। राष्ट्रपरिपालनयुद्धादिकमपि धनधान्य-वस्त्राद्युत्पादनमन्तरा दुष्करम्। अतस्तदुपार्जयितॄणामभावात् क्षत्रिया अपि परिपालनादिकर्मणि न प्राभुवन्। ततश्च ब्राह्मणेभ्य एव वैश्याः सृष्टाः, अर्थात् ब्राह्मणसमुदायेषु ये कृषिवाणिज्यादिकर्मकरणाय प्रवीणाः सशक्ता अवलोकितास्ते वैश्यरूपेण विनिर्मिताः इत्यर्थः। एवं धनधान्याद्युपार्जनमपि परिचारक-परिश्रमादिसापेक्षम्, विना हि परिचारकैर्न शक्यं धनधान्याद्युपार्जनकर्म निर्वर्तयितुमिति मत्वा ब्राह्मणेभ्य एव परिचरणकर्मणः शूद्राः सृष्टाः। अर्थात् ब्राह्मणेषु ये परिचर्यापरिश्रमादि-कर्मकरणे समर्था अवलोकिताः, ते शूद्ररूपेण विसृष्टा इत्यर्थः।

एवं कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणेऽपि ब्राह्मणजातेः सत्ययुगे एकत्वेनाभिन्नत्वेन वर्तमानायाः सकाशादेव क्षत्रादीना-मुत्पत्तिः श्रूयते। 'ब्रह्म देवानजनयत्, ब्रह्म विश्वमिदं जगत्। ब्रह्मणः क्षत्रं निर्मितं ब्रह्म ब्राह्मणमात्मना ॥' (तै० ब्रा० २।४।८) इति। ब्रह्म=ब्राह्मणवर्णः, देवान्=विदुषः-प्रशस्तविद्योपेतान्, अजनयत् स्वस्मादेव प्रादुर्भूतान् कृतवानित्यर्थः। 'विद्वांसो वै देवाः' (श० ३।७।६।१०) इति शतपथब्राह्मणश्रुतेः। इदं

विश्वं=सर्वं क्षत्रादिजगत् ब्रह्म=ब्राह्मणवर्णाभिन्नमासीदित्यर्थः। ब्रह्मणः=ब्राह्मणेभ्यः, क्षत्रं=क्षत्रियाः, निर्मिताः। आत्मना=स्वरूपेण ब्राह्मणो ब्रह्म एव मन्तव्यः।

तथा महाभारते पञ्चमवेदस्वरूपेऽपीदमुक्तम्—'एकवर्णमिदं पूर्वं विश्वमासीत् युधिष्ठिर!। गुणक्रियाविशेषेण चतुर्वर्णं प्रतिष्ठितम् ॥' (शान्तिपर्वणि मोक्षधर्मे० २६।१२२) इति। एवं पुराणमूर्धन्ये श्रीमद्भागवतेऽपि—'एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः। देवो नारायणो नान्यः, एकोऽग्निवर्ण एव च ॥' (भा० ६।१५।४८) इति। 'आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः।' (भा० ११।१७।१०) इति। वायवीये महापुराणेऽपि च—'अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः। वर्णाश्रमव्यवस्थाश्च न तदासन् न संकरः॥ अनिच्छाद्वेषयुक्तास्ते वर्तयन्ति परस्परम्। तुल्यरूपायुषः सर्वे अधमोत्तमवर्जिताः॥' (८।१६।२०) इति। सकामे शुभकर्मणि तदानीं प्रवृत्ति र्नासीत्, सर्वेषां निष्कामत्वात् निष्काम एव शुभकर्मणि प्रवृत्तिः आसीत् इति गम्यते। सर्वथा-अप्रवृत्तिः-कर्माभावस्त्वशक्यः। 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।' (गी० ३।५) इति गीतास्मृतेः। वर्णभेदाभावात् सांकर्यमपि कथं स्यात्? अत एव तदा न कश्चन वर्णसंकर आसीत्। अनिच्छाद्वेषयुक्ताः=इच्छारहिताः-निःस्पृहाः द्वेषरहिताश्च आसन्। ते सर्वे सत्ययुगे परस्परं समप्रेमसद्भावेनैव वर्तयन्ति=वर्तयामासुः इत्यर्थः। तेषां सर्वेषां समानान्येव रूपाणि आसन्, न शुक्लादिवर्णभेद आसीत्। आयूंष्यपि समानान्येवासन्-न न्यूनाधिकानीत्यर्थः। अधमोत्तमवर्जिताः=नीचोच्चभावरहिताः।

इत्येवं सत्ययुगे वर्णविभागाभावमभिधाय बह्वोः कालादनन्तरं तत्रैव वायुपुराणे त्रेतायुगसमये गुणकर्मादिमूलको वर्णविभागः तत्तत्कार्यसिद्धये परिकल्पित इत्यपि स्फुटतरमभिहितम्-'मर्यादाः स्थापयामास यथाऽऽरब्धाः परस्परम् । · · · · · सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते । · · · · इतरेषां कृतत्राणाः स्थापयामास क्षत्रियान् । · · · · ये चान्येऽप्यबलास्ते तु वैश्यकर्मणि संस्थिताः ॥ · · · · शोचन्तश्च द्रवन्तश्च, परिचर्यासु ये रताः । निस्तेजसोऽल्पवीर्यांश्च शूद्रांस्तानब्रवीत्तु सः ॥' (वायु० पु० ८।२४।२७) इति कथयन्ति ।

## अन्यद्—व्याख्यानम्

केचन—एवं मन्त्राक्षराणि व्याचक्षते—मुखादिशब्दाः लाक्षणिकाः, मुखादिसम्भवान् गुणान् लक्षयन्ति । तत्र दृश्यमाना प्रथमा विभक्तिः पञ्चम्यर्था । यथाहि—अस्य=पुरुषस्य प्रजापतेः मुखः=मुखे भवाः विद्याविनयादयो मुख्याः गुणाः, सत्यप्रियहितवदनोपदेशादीनि कर्माणि च तेभ्यः इत्यर्थः । ब्राह्मणः आसीत्, आविष्कृतः समुत्पन्नो भवति । तथा बाहू=बाह्वोः भवाः बलवीर्यपराक्रमादयो गुणाः, तेभ्यः, राजन्यः=क्षत्रियः—क्षतत्राणपरायणो बाहुभवगुणयुक्तः प्रादुर्भूतः उत्पन्नोऽभदित्यर्थः । ऊरुः=मध्यभागः, तत्र भवाः-धनधान्योपार्जनवितरणौदार्यप्रावीण्यादयो मध्यमा गुणाः कृषिव्यापारादीनि कर्माणि, तेभ्यो वैश्यः तद्गुणकर्मसंयुक्तः प्रकटितः-उत्पन्न आसीदित्यर्थः । पद्भ्यां=पादशब्दस्तद्वत् नीचगुणान् जडबुद्धित्वमूर्खत्वश्रमत्वादि-अधमगुणान् सेवासहायादीनि कर्माणि च लक्षयति, तेभ्योऽधमगुणकर्मभ्यः शूद्रः-सेवाश्रमादिनिकृष्टगुणकर्मविशिष्टः पराधीन अजायत=संभूत इत्यर्थः । यद्यपि सेवाश्रमादीनां नास्ति-अधमगुणत्वं,

तथापि जडबुद्धित्वमूर्खत्वादिनिकृष्टगुणवैशिष्टयारोपामपि तत्त्वं प्रत्येतव्यम् । अत एवोक्तं-भविष्यपुराणेऽपि–'सोमाद्वै ब्राह्मणाः जाताः, सूर्याद्राजन्यवंशजाः । समुद्रात् सकला वैश्याः,दक्षाच्छूद्राः बभूविरे ॥'(प्रति० प० खं० ४ । अ० ५।१३) इति । 'कल्पिताः गुणकर्मभ्यां वर्णाः सोमादिरूपणात् । पुराणार्थानुसारेण श्रुतेरर्थः प्रसिध्यति ॥ ब्राह्मो गुणः शमादिश्च क्षात्रः शौर्यादिकः विशः । कृष्यादिकर्मदक्षत्वं शौद्रः सेवादिकौशलम् ॥' इति ।

## वर्गहीनसमाजवादः-ब्राह्मणत्वादिजात्युच्छेदवादः

अन्ये पौराणिकाः स्वतन्त्रविचारनिपुणाः समाजराष्ट्रै-क्यसमर्थनतत्पराः–ब्राह्मणादिवर्गभेदस्य मिथः कलहबीजत्वं मन्यमानाः 'साधकबाधकप्रमाणाभ्यां वस्तुसिद्धिरि' ति न्यायेन ब्राह्मणादिवर्णविभागस्य वर्णभेदाकारभेदबुद्धिभेदगुणदोषभेदा-दीनि साधकानि प्रमाणानि नोपलभामहे, एवं एकस्माज्जनि-सत्त्वादीनि बाधकानि प्रमाणानि चोपलभामहे, अतो ब्राह्मणादि-वर्णविभागः प्रत्यक्षादिप्रमाणानुग्रहशून्यतया निरर्थक एवेति प्रतिपादयन्ति । यथाहि–भविष्यपुराणे ब्राह्मे पर्वणि तावत् शुक्लादिवर्णविभागो ब्राह्मणादिवर्गविभेदको नैवास्तीत्याहुः–'न ब्राह्मणाश्चन्द्रमरीचिशुभ्राः, न क्षत्रियाः किंशुकपुष्पवर्णाः । न चेह वैश्या हरितालतुल्याः शूद्रा न चांगारसमानवर्णाः ॥' (भ० पु० ४१।४१) इति । अयमर्थः–नहि सर्वे ब्राह्मणाः रजनीकांत-रश्मिसदृशाः धवला अवलोकिताः, रक्तपीतकृष्णोपेता अपि बहवो दृष्टाः । यदि शुक्लगौरवर्णमात्रेण ब्राह्मणत्वं सिद्धयेत् तदा पाश्चात्यानामाङ्गलानामपि तत्त्वं प्रसज्येत, अत एव ते भारते 'गौराः गौराङ्गाः' इति संज्ञया प्रसिद्धाः सन्ति । हैद्रा-बादनगरे कश्चन वेदपाठी पुरोहितो ब्राह्मणो युवतिकृष्णकेश-

कान्तिमपि तिरस्कुर्वता कृष्णवर्णेन संयुक्तोऽस्माभिरवलोकितः। यस्य किल कृष्णशरीरे केवलं दन्ता एव शुभ्रवर्णत्वेन प्रतीताः भवन्ति। तेन हि वेदमन्त्राणां विशुद्धस्वरेण विलक्षणपद्धत्या च क्रियमाणः पाठः श्रोतॄणां कर्णकुहरेषु मधुरतमममृतं सिञ्चतीव तन्मनांस्याह्लादयतीति। तद्वैपरीत्येन भगवत्पादाचार्यशंकरस्य प्रादुर्भावस्थले कालटीग्रामे रामकृष्णसेवाश्रमे कश्चन बालकश्चतुर्दशवर्षीयस्तेजस्वी गौरवर्णस्तदानीं वेदमन्त्रैः सस्वरशुद्धरूपेण समुच्चरितैर्देवगृहे पूजां कुर्वाणोऽस्माभिरवलोकितः। तत्रत्येनाश्रमाध्यक्षेण महात्मना वयं पृष्टाः, अयं कोऽस्तीति?। सहसाऽस्माभिरभिहितं अयं किल ब्राह्मणार्भक एव स्यात्, अन्यः कथं स्यात्? गौरवर्णत्वात्, विशुद्धोच्चरणशीलत्वात्, आकर्षकमुखाकृतिविशिष्टत्वाच्च, तेन किञ्चित् प्रहस्योक्तं-नायं ब्राह्मणबालकोऽपि तु हरिजनार्भकोऽस्तीति। स च स्वकीयजातिगर्हां नाममात्रेणाप्यनुभूय समुज्ज्वलमुखोऽपि सपद्येव म्लानमुखोऽभवत्। अस्माभिराश्रमाध्यक्षो महात्माऽभिहितः—यस्य किल भवता संमुदाराशयेनेदृशो ब्राह्मणाधिकारः प्रदत्तः, तत्समक्षे कथमपि नैवं वक्तव्यम्; सर्वेभ्योऽपि तिरस्कारेभ्यो जातितिरस्कारो बलीयानस्तीति। तस्मात् शुक्लवर्णादेर्हेतो ब्राह्मणादिषु व्यभिचरितत्वं निश्चितम्। अत एवेदं समीचीनमुक्तं—'न ब्राह्मणाः चन्द्रमरीचिशुभ्राः।' इति।

एवं सर्वे क्षत्रियाः पलाशकुसुमानां रक्तवर्णेन तुल्याः अरुणाः प्रतीयमाना नैव भवन्ति, एवं वैश्याः हरितालस्य पीतवर्णेन समानाः नैव सन्ति। एवं शूद्राः अङ्गारसमानकृष्णवर्णसंयुक्ता नैव सन्तीति। शुक्लादिवर्णविभागो ब्राह्मणादिविभागस्य प्रयोजको नैवास्ति। कस्यांचित् पाठशालायां शिक्षणाय संमिल्या-

वस्थितान् कश्चनापरिचितो वर्णभेदमात्रेण ब्राह्मणादिबालकान् विभक्तत्वेन ज्ञातुं नैव प्रभवतीति प्रत्यक्षमेतत् ।

संप्रति-ब्राह्मणादिवर्गभेदस्य प्रयोजकाः विलक्षणाः पादादिप्रचाराः, मुखनेत्रकेशाः, सुखदुःखानि च रक्तत्वङ्मांसमेदोऽस्थिरसाश्चापि नैव भवन्ति, अपि तु ब्राह्मणादिचतुर्वर्गेषु ते समाना एवोपलभ्यन्ते इत्याहुः 'पादप्रचारैर्मुखनेत्रकेशैः, सुखेन दुःखेन च शोणितेन । त्वङ्मांसमेदोऽस्थिरसैः समानाश्चतुः–प्रभेदा हि कथं भवन्ति ।।' ( भ० पु० अ० ४१।४२ ) अयमर्थः—ब्राह्मणाः क्षत्रियादिभ्यः किं विभिन्नप्रकारेण पादैः संचरन्ति, एवं क्षत्रिया वैश्यादिभ्यश्चेति नोपलभ्यते, अतस्तेषां पादादिप्रचारोऽपि समान एवास्ति । एवं मुखाकृतयो नेत्राणि केशाश्च समाना एव दृश्यन्ते । एवं ब्राह्मणानामेव सुखमिष्टं, अन्येषां त्वनिष्टमित्यपि नास्ति, एवं दुःखं सर्वेषां समानरूपेणानिष्टमेव । एवं ब्राह्मणानां शरीरे वर्तमानं शोणितं पयोवत् शुक्लं, क्षत्रियाणां मधुवत् रक्तं, वैश्यानामाम्ररसवत् पीतं, शूद्राणाञ्च कज्जलवत् कृष्णं वोपलभ्यते किं ? इत्यपि नास्ति, सर्वेषां शरीरान्तर्गतं शोणितं रक्तवर्णमेवोपलभ्यते, नास्ति रक्तवर्णभेदः । एवं त्वङ्मांसादयोऽपि समाना एव सन्ति, तस्माद् ब्राह्मणादिषु चतुर्वर्गप्रभेदाः कथं भवन्ति ?। तत्प्रभेदप्रयोजककारणानां सर्वथाऽनुपलभ्यमानत्वात्, प्रभेदाः मिथ्याकल्पनाप्रसूतया नैव मन्तव्या इति भावः ।

एवं तनुप्रमाणाकृत्यादयोऽपि ब्राह्मणादिजातिभेदकाः नैव भवन्तीत्याहुः—'तनुप्रमाणाकृतिगर्भवास-वाग्बुद्धिकर्मेन्द्रियजीवितेषु । बलत्रिवर्गामयभेषजेषु न विद्यते जातिकृतो विशेषः ।।' ( भ० पु० ४१।४३ ) इति । अयमर्थः—शरीरप्रमाणमपि

सर्वेषां ब्राह्मणादीनां समानमेवोपलभ्यते, ब्राह्मणादीनां शरीराण्यधिकप्रमाणानि, शूद्रादीनां न्यूनप्रमाणानीति च न्यूनाधिक्यं नावलोक्यते। एवं मुखाद्याकृतिरपि, ब्राह्मणादिष्वेव सौन्दर्यलावण्योपेता वर्तते, शूद्रादिषु नोपलभ्यते इत्यपि नास्ति, शूद्रादीनामपि सा सौन्दर्याद्युपेता कुत्रचित् दृश्यते, एवं ब्राह्मणादीनामपि कुत्रचित् सा तद्रहिताऽवलोक्यते, अतः शरीरप्रमाणवत् आकृतिभेदोऽपि तद्भेदको न मन्तव्यः। एवं गर्भवासदुःखमन्तरेण ब्राह्मणादयः समुत्पद्यन्ते, शूद्रादयस्तु तद्दुःखमनुभवन्तः सन्त एवेत्यपि नास्ति वैलक्षण्यम्। अतः सर्वेषां समानमेव गर्भवासदुःखमस्ति। यद्वा गर्भे वसन्तो ब्राह्मणादयो मुखादिभ्य एव समुत्पद्यन्ते, शूद्रादयस्तु पादादिभ्य इत्यपि वैषम्यं नावलोक्यते। यतः सर्वेषां समानमेवास्ति एकस्मात्स्थानात् दुःखविशिष्टमभिनिष्क्रमणम्। एवं वाणीषु ज्ञानेन्द्रियेषु कर्मेन्द्रियेषु च नास्ति किमपि वैषम्यम्। एवं जीवितेष्वपि नास्ति वैलक्षण्यम्। ब्राह्मणाः शतं वर्षाणि जीवन्ति, क्षत्रियाः पञ्चाशत्, वैश्याः पञ्चविंशतिः, शूद्राश्च दश वर्षाणि एव जीवन्तीत्यपि नास्ति जीवनवैलक्षण्यम्। तथा च जीवनमपि मनुष्यविहितनियमानुरोधि समानमेवोपलभ्यते। शरीरादिबलमपि ब्राह्मणादिष्वधिकं, शूद्रादिषु न्यूनमित्यपि नास्ति तत्कृतं तारतम्यम्। एवं धर्मभावना, अर्थलाभस्पृहा, कामपिपासाऽपि च समानैव सर्वेषु समुपलभ्यते, नास्ति किमपि वैषम्यम्। अर्थात् सर्वे ब्राह्मणा विषयविरागशालिनः सन्निष्ठाः, एवं शूद्राः सर्वे विषयलोलुपा असन्निष्ठाः सन्ति, इत्यपि नास्ति नियमः; एवं ब्राह्मणादयो धनानि नापेक्षन्ते, शूद्रादय एव तान्यपेक्षन्त इत्यपि नास्ति। एवं ब्राह्मणादय एव धर्मपालनतत्पराः भवन्ति, शूद्रा-

दयस्तु सर्वथाऽधर्मसंयुक्ता एव सन्तीत्यपि नास्ति। एवं ब्राह्मणादयो रोगरहिताः स्वस्था एव भवन्ति, शूद्रादयः सर्वथा रोगसमाक्रान्ता एवेत्यपि नास्ति। ब्राह्मणादीनां व्याधयस्तु मधुरौषधसेवनेनैव प्रणश्यन्ति, शूद्रादीनान्तु कटुतमौषधसेवनेनैवेत्यपि नास्ति वैलक्षण्यम्। तथा च शरीरप्रमाण-मुखाद्याकार-गर्भवासादिकष्ट-वाणी-नेत्रादिज्ञानेन्द्रिय-पादादिकर्मेन्द्रिय--जीवनसमय-बल-अर्थ-धर्म-काम-रोग-औषधादिषु ब्राह्मणत्वादिजातिकृतं वैलक्षण्यं नावलोक्यते, अतो ब्राह्मणादिवर्गभेदकाः शरीरप्रमाणादयो नैव सन्तीति भावः।

एवं वर्णविभागप्रयोजककारणाभावमभिधाय वर्णविभागाभावसाधकानि-एकस्मादेव परमपितुः परमेश्वरादुत्पत्तिमत्त्वरक्षितत्वादीनि सन्ति भूयांसि प्रमाणानीत्यप्याहुः—'स एक एवात्र पतिः प्रजानां, कथं पुन र्जातिकृतः प्रभेदः ?। प्रमाणदृष्टान्तनयप्रवादैः परीक्ष्यमाणो विघटत्वमेति।। चत्वार एकस्य पितुः सुताश्च, तेषां सुतानां खलु जातिरेका। एवं प्रजानां हि पितैक एव, पित्रेकभावान्न च जातिभेदः।।' (भ० पु० ४१।४४-४५) इति। प्रजानां=ब्राह्मणादीनां सर्वेषां पुत्रस्थानीयानां स एक एव परमेश्वरः परमपिता पतिः=पालकोऽस्ति। अतो जातिप्रयोजितः प्रभेदः कथं स्यात् ? नैव स्यादित्यर्थः। अत एव शास्त्रादिप्रमाणैः, लोकसिद्धदृष्टान्तैः, न्यायतर्कप्रवादैश्च परीक्ष्यमाणो जातिकृतविभेदो, विघटत्वमेति=संघटितो नैव भवतीत्यर्थः। लौकिकदृष्टान्ते हि एकस्मात् पितुः सकाशात् समुत्पन्नानां चतुर्णां पुत्राणां एकैव जाति र्विलोक्यते, न तत्र जातिभेदो मन्यते। एवं सिद्धान्तेऽपि सर्वेषां ब्राह्मणादिप्रजानां परमेश्वररूपस्य परमपितुः एकत्वादेव जातिभेदो नैव मन्तव्यः।

संप्रति उदुम्बरवृक्षफलदृष्टान्तेन जातिभेदाभावं समर्थयन्ति-'फलान्यथोदुम्बरवृक्षजाते यथाग्रमध्यान्तभवानि यानि। वर्णाकृतिस्पर्शरसैः समानि, तथैकतो जातिरिति प्रचिन्त्या ॥' (भ० पु० ४१।४६) इति। यथोदुम्बरवृक्षस्याग्रिमानि मध्यमानि, अन्तिमानि च फलानि, वर्णैः, आकारैः स्पर्शैः रसैश्च समानान्येव भवन्ति, न विषमाणि, अतोऽग्राद्युद्भवकृतो वर्णादिनिरूपितो भेदस्तत्र नावलोक्यते। तथैकस्मात् समुत्पन्नानां प्रजानां वर्णादयोऽपि समाना एवावलोक्यन्ते, अतो जातिरपि समानैव मन्तव्या, न विलक्षणा इति भावः। प्रचिन्त्या=पूर्वोक्तदृष्टान्तद्वारा विचारेण जातेरेकता निश्चेतव्येत्यर्थः।

अत एव चतुर्वर्णेषु ब्राह्मणादिषु जातिवैलक्षण्यप्रयोजको न चान्तःप्रभवो न च बहिःष्प्रभवः कश्चन भेदो निरीक्ष्यते इत्याहुः-तत्रैव भविष्यपुराणे ब्राह्मे पर्वणि-'सामग्य्रनुष्ठानगुणैः समग्राः शूद्राः यतः सन्ति समा द्विजानां। तस्माद्विशेषो द्विजशूद्रनाम्नो र्नाध्यात्मिको बाह्यनिमित्तको वा स्यात् ॥' (अ० ४१।३०) 'तस्माद्विप्रेषु जात्यादि-सामग्रीप्रभवो न सः। तस्मान्न च विभेदोऽस्ति, न बहिर्नान्तरात्मनि ॥ न सुखादौ न चैश्वर्ये नाज्ञायां न भयेष्वपि। न वीर्ये नाऽऽकृतौ नाक्षे न व्यापारे न चायुषि ॥ नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले। न प्रज्ञायां न वैराग्ये, न धर्मे न पराक्रमे ॥ न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे। न स्त्रीगर्भे न गमने, न देहमलसम्प्लवे ॥ नास्ति रन्ध्रे न च प्रेम्णि, न प्रमाणे न लोमसु। शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः। नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि ॥ (भ० पु० अ० ४१।३५-३६-३७-३८-३९-४०) इति। त्रिदशैः=देवैः,

संहतैः=संमिलितैः, मृग्यमाणः=अन्विष्यमाणोऽपि नेक्ष्यते=नावलोक्यत इत्यर्थः ।

## समानप्रसवात्मिका जातिः

येषु किल समानरूपेण तुल्यतया प्रसवः सन्तानोत्पत्तिर्भवति तेषु स्त्रीपुरुषेषु समाना-तुल्यैव जातिर्मन्तव्या, न विषमा–विलक्षणेति । यतो यदि हि गवाश्वादिवत् जन्मत एवाभविष्यज्जातिभेदः, तदा न क्षत्रियादिस्त्रीषु ब्राह्मणादिभ्यो विजातीयत्वेनाभिमतेभ्योऽपत्यान्युदपत्स्यन्त । न हि गवादिषु अश्वादिभ्योऽपत्यानि जायन्ते । उद्भवन्ति च ब्राह्मणादिस्त्रीषु क्षत्रियादीनां विजातीयत्वेनाभिमतानां संयोगादपत्यानि । ततश्च ब्राह्मणादिषु जातिभेदोऽयं सांकेतिकः काल्पनिको विद्यते, न वास्तविक इत्यवगम्यते । अत एव भविष्यपुराणे ब्राह्मे पर्वणि षष्टिकल्पे–जातेः समानप्रसवात्मकत्वं लक्षणं, तथा पूर्वोक्त एव निर्णयो विस्तरेणेत्थं प्रतिपाद्यते–'शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति । सा कामदुःखविगमे गर्भं धत्ते समागमे ।। कामं कामातुरायै तु रोचन्ते शूद्रमानवाः । मैथुनं प्रति ब्राह्मण्यै, सापि तेषां सुखावहा ।। ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः । ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः ।। अनड्वानेव गोरेव कामं पुष्णाति संगमे । घोटकाश्च रतिं सम्यक्कुर्वते वडवासु च ।। पतिं करभमेवाप्य करभी रमते मुदा । गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी ।। तिर्यग्जातिस्त्रिया साकं कुर्वाणोऽपि हि मैथुनम् । न तस्याः कुरुते गर्भं नरो भोगरतोऽपि यः ।। तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना । नाधत्ते तत्कृतं गर्भं, न युक्तं मैथुनं तयोः ।। नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्रीमनुष्ययोः । येन संक्षीयते भेदः प्रस्फुटं द्विजशूद्रयोः ।।' (भ०

पु० अ० ४३।३९-४०-४१-४२-४३-४४-४५-४६) 'तस्मान्मनुष्यभेदोऽयं संकेतबलनिर्मितः ।' (४३।५१) 'व्यलीककल्पनैवैषा, तस्माज्जात्यादिकल्पना ।। (४३।५७)इति । अनड्वान्=वृषभः, गोः=धेन्वाः । करभं=उष्ट्रं-क्रमेलकं, करभी=उष्ट्री । तिर्यग्जातिः=कुक्कुरगर्दभादिजातिः । तिरश्चा=कुक्कुरादिना । व्यलीका=मिथ्या ।

अपि च ये केऽपि ब्राह्मणादयो वा शूद्रादयो वा पापाः दुष्टाः स्युः, तेषु श्रेष्ठत्वादिकं कथमपि नैव मन्तव्यम् । इत्याहुः- 'वैदिकाखिलसंस्कारभूषिताश्च द्विजातयः । सर्वकार्यकराः स्युर्ये, वृषलानतिशेरते ।। सर्वकार्याणि-निषिद्धान्यपि ये कुर्वन्ति, ते वृषलान्=शूद्रानपि, अतिशेरते=अतिक्रम्य वर्तन्ते, शूद्रेभ्योऽपि हीना वेदितव्याः । 'चण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः । स्तेनो गोघ्नः सुरापानः परस्त्रीरमणप्रियः ।। मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः । धूर्तश्चौरः शठः पापी सर्वाशी सर्वविक्रयी ।। वाङ्मनःकायजै र्दोषै र्हता ये ब्राह्मणाधमाः । ते न शुद्धिं व्रजन्तीह, मूढाः यज्ञशतैरपि ।। शूद्राणां यान्यनिष्टानि सम्पद्यन्ते स्वभावतः । विप्राणामपि तान्येव निर्विघ्नानि भवन्ति च ।।' (भ० पु० ४३।५-६-७-८-९-१०) 'विक्रीणते ह्यविक्रेयमभक्ष्यद्रव्यभक्षिणः । शूद्रकर्मानुतिष्ठन्तो निस्त्रपास्ते नराधमाः ।। शिल्पकैंकर्यवाणिज्यकृष्याद्यारम्भलम्भिनः । गृह्णते सम्पदो बाह्याः धनधान्यगृहादिकाः ।। क्रोधाद्याभ्यन्तरान् दोषान् तथा दुष्टमनोरथान् । अत्यजन्तः कथं ते स्युः श्रेष्ठाः स्त्रीकुचमर्दिनः?।। नोपादेयानि वस्त्राणि, नित्यमाददते द्विजाः । हापयन्ति न हेयानि कथं ते गुरवः क्षितौ ?।। सरलान् श्रद्धामयान् नम्रान्, चण्डाश्चण्डालचेष्टिताः । वैतण्डिकास्ते निघ्नन्ति, यथा सिंहो

मृगान् पशून् ॥ (भ० पु० ४३।३१-३२-३३-३४-३५-३६) इति। चण्डकर्मा=चण्डं-प्रचण्डं-भयंकरं कर्म यस्य सः। विकर्मस्थः= विरुद्धे-निषिद्धे कर्मणि तिष्ठतीति। निस्त्रपाः=निर्लज्जाः कामक्रोधादिदोषवतां कथं श्रेष्ठत्वं गुरुत्वं वा प्रत्येतव्यं नैवेत्यर्थः?। एतेन—'दुःशीलोऽपि द्विजः पूज्यः, न शूद्रो विजितेन्द्रियः। कः परित्यज्य दुष्टां गां दुहेच्छीलवतीं खरीम् ॥' इति निरस्तम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्, गोखर्यो विजातीयत्वात्। न ह्यत्र द्विजशूद्रयोस्तद्वत् वैजात्यमवलोक्यते। तस्य प्रतिषिद्धत्वात्, सजातीयत्वस्य समर्थितत्वाच्च। अपि च विजितेन्द्रियाणां भगवद्भक्तानां शूद्रादित्वेनाभिमतानां श्रीकबीरदादुतुकारामविवेकानन्दारविन्दयोगिगुरुनानकगोविन्दसिंहप्रभृतीनां श्रेष्ठत्वपूज्यत्वगुरुत्वादेः स्वीकृतत्वाच्च।

## जापानदेशाभ्युदयनिरीक्षणम्

किञ्च तावदवलोक्यतां जापानदेशम्। गृह्यताञ्च तस्मात्संघट्टनादिशिक्षणम्। प्राक् तस्मिन् देशे तद्वास्तव्यानां समाजे 'भारवर्ष इव' दुःस्वार्थमौढ्यानौदार्यप्रसूता भूयस्यः कुप्रथाः समवर्तन्त। तत्तज्जातिकुलपदादिवितथाभिमानप्रयुक्तः संघट्टनविरोधी महान् भेदभावश्च प्रचलित आसीत्। अमुकजातीयानामेवामुकशिक्षणं युद्धविद्यादि च नियतं कुलधनमभवत्। परमेतन्मौढ्यं तैः सपद्येव समबुध्यत। महता यथार्थशिक्षणप्रचारेण च तदखिलं कालुष्यममार्जयत्। संप्रति ते निखिला अपि जापानीयाः समानजातयः समानशिक्षणाः समानसद्भावाः समानयुद्धयन्त्रादिविद्यानिपुणाः समानवेषाः समानव्यवहाराः समानदेशधर्मस्नेहाश्चाभूवन्। कूपमण्डूकताऽनुसरणशीलान् दुःस्वार्थदुरभिमानमौढ्यमूलकान् संघट्टनवि-

रोधप्रयोजकान् सर्वानपि तुच्छभावानपसारितवन्तः; एवं जापानीयैः प्ररूढेन देशप्रेम्णा तद्वास्तव्याखिलजनाभ्युदयकामनया च महत्परिवर्तनं विहितम्। विकृतमखिलं संशोध्य यत्खलूत्कृष्टं सर्वजनहितकरं देशधर्मोन्नतिसाधकं नीतियोग्यतानुकूलं पक्षपातादिरहितं तदेव संगृहीतम्।

## भारतराष्ट्रसमीक्षणम्

परन्तु सोऽयं महान् खेदस्य विषयो, यदस्माकं भारते स्वतन्त्रेऽपि राष्ट्रे सांप्रतमपि भूयसां जनानां हृदयेषु दुःस्वार्थदुरभिमानपक्षपातमौढ्यनिदानाः संघट्टनदेशाभ्युदयविरोधिन्यः 'वयमुत्तमा अधमा इमे न गण्याः, अस्माकमेवेदृशोऽधिकारो नान्येषामि' त्यादिलक्षणाः स्वीयार्यहिन्दुबन्धुविषयिण्यः तुच्छाः संकुचितभावनाः जाग्रतितराम्। अत एव दम्भपूर्णनिर्मूलकुविचारैः सम्प्रति हिन्दूनां वैयक्तिकं सामाजिकञ्च जीवनं कलुषितं सदवलोक्यते। सवर्णा हिन्दवः केवलं हरिजनानेवाऽन्त्यजान् अस्पृश्यान् न मन्वतेऽपि तु मिथः सर्वान् सर्वेभ्यः। श्रुतं हि विश्वसनीयेभ्योऽस्माभिः महीशुरनगरे संस्कृतमध्येतुकामान् कांश्चित् तत्रत्यान् गौडसारस्वतब्राह्मणछात्रान् विद्यालये प्रविष्टान् अवलोक्य तत्रत्या द्राविडब्राह्मणविद्यार्थिनः स्वनिष्ठोत्तमत्वाभिमानाः सहसा विद्यालयं परितत्यजुः। 'तदैव वयं विद्यालये प्रवेशं करिष्यामो यदैषामस्मत्तोऽधमानां गौडसारस्वतछात्राणामस्मान्निष्कासनं स्यादि' त्यर्थं ते सत्याग्रहं किं ? दुराग्रहं चक्रिरे। दाक्षिणात्या द्राविडाः केचन गौडान्-औदिच्यान्—'काशीशूद्रा इमे' इत्युक्त्वा निन्दन्त्येव। हिमालयस्थितबद्रिनारायणविग्रहस्य पूजने सर्वोत्तमस्य दाक्षिणात्यस्य द्राविडनंपूतिरिब्राह्मणस्यैवास्त्यधिकारो नान्येषां हिमालयीय-

ब्राह्मणानाम् । अत एव तन्मूर्तिस्पर्शं कर्तुं नान्ये वेदविदः सदाचारा अपि ब्राह्मणाः शक्नुवन्ति । यदेयं ब्राह्मणेषु ब्राह्मणानामीदृशी कथा, तदा ब्राह्मणत्वमिथ्याभिमानवशंवदाः केचन क्षत्रियादिकं दृष्ट्वा तिरस्कारगर्वपूर्णे नेत्रे विधाय 'शूद्रा इमे नीचा इमे' 'कलावाद्यन्तयोः स्थितिः' इत्यभिधाय तस्मै घृणां प्रकटयेयुः, तत्र किमु वचनीयम् । दण्डिनो भिक्षुकाः सर्वत्यागमये पारिव्राज्ये स्वीकृतेऽपि ब्रह्मत्वस्य नहि, ब्राह्मणत्वस्य मिथ्याभिमानवशंवदाः सन्तो, दण्डरहितान् परमहंसभिक्षून् विलोक्य श्वानवत् घुरघुरायमाणाः 'शूद्रा इमे अस्पृश्या भ्रष्टाः शापिताः, एभ्यो न कैश्चन श्रेष्ठिभिर्भिक्षा, न च पण्डितैर्विद्या दातव्या, न च सत्करणीयाः' इति जल्पन्तः स्वान्तरवस्थितं वैराग्यादिकं नहि, विद्वेषादिकमेवाविष्कुर्वन्ति । इत्येवं कतिपयब्राह्मणादिहिन्दुहृदयानां विलक्षणविषमताऽतीवघृणास्पदा निन्दनीया चास्ति । हिन्दूनां पारस्परिकतिरस्कारभावनैवास्मिन् भारते देशे दशकोटयधिकयवनकृश्चियनसमाजस्यास्ति जननी । यत्र किल जनसमाजे मनुष्यत्वस्य समादरः प्रतिष्ठा च नास्ति, यत्र च परस्परं प्रेमसद्भावविरोधिघृणातत्तज्जात्यपमानजनकव्यवहारोऽवलोक्यते, तत्र को मतिमान् अवस्थातुमिच्छेत् ?

अत एव केरलदेशादौ हरिजना अन्त्यजाः यावत्पर्यन्तं स्वान् हिन्दुत्वेन पद्मनाभदासजनार्दनदासादिनामत्वेन, तुलसीदेवदेवीपर्वादिपूजकत्वेन च मन्यमाना भवन्ति, तावत्पर्यन्तं तेऽस्पर्श्याः उच्चतमवर्णाभिमानिभिर्ब्राह्मणादिभिर्गर्हणीयाः सन्तः स्वकीयवीथीष्वपि प्रवेशयोग्यतारहिता एव भवन्ति; त एव यदा कृश्चियनाः विदेशतद्भाषातद्वेषसंस्कृत्यादिप्रियाः स्वदेशस्वभाषास्ववेषस्वसंस्कृत्यादिविमुखाः हिन्दुधर्मसमाजाद्विद्वेषिणो

भवन्ति, तदा तु ते सपद्येव तैरेवोत्तमहिन्दुभिः समादरणीयाः 'साहबेति' गौरवशालिनाम्ना संबोध्याश्च सन्तः स्ववीथीप्रवेशस्य किं? स्वगृहप्रवेशस्यापि योग्यताशालिनो भवन्तीति महदाश्चर्यमेतत्। त एव संप्रति प्रान्तीयादिशासने सत्तारूढाः सन्तः हिन्दुधर्मसमाजयोर्महतीमवहेलनां कुर्वन्तीति प्रत्यक्षमेतत्। अतः—'यत्समाजशरीरस्य× पादः शूद्रः पृथक्कृतः। तन्मूर्ध्नि न कथं कुर्युः? पादाघातं विधर्मिणः॥ स्वाङ्ग 'शूद्र' तिरस्कारा-देव नूनं द्विजातिभिः। प्रापितं भारतं वर्षं शोचनीयदशामिमाम्॥' इति।

## त्रिविधाभिमानद्वेषादिदोषाढ्यस्य हिन्दुसमाजस्य मौढ्यदर्शनम्

अत एव भेदभावमिथ्याभिमानद्वेषवैरपूर्णात् हिन्दूनां विषाक्तघृणितवातावरणादस्मात् समुद्विग्नाः जना इस्लामाद्याश्रयं लब्ध्वा स्वजीवनं धन्यं मन्यमाना बोहराखोजेत्यादिनामभिः लक्षाधिकाः प्रसिद्धा यवना बभूवुः ब्राह्मणाः बभूवुः 'बोहराः' लुहाणा भाटियाः क्षत्रियाः बभूवुः खोजाः' इत्यादिरूपा प्रामाणिकी प्रसिद्धिरपि विशेषतो गुर्जरे देशे जागर्त्येव। एतत्खोजान्वयजातेन प्रसिद्धेन 'जिन्ने'तिनामधेयेन म्लेच्छेन भारतीययवनान् मिथ्यावादेन प्रतार्यखण्डस्य भारतवर्षस्य खण्डद्वयं पूर्वपश्चिमपाकिस्ताननामाङ्कितं कृतमिति सर्वत्र प्रसिद्धं प्रत्यक्षमवलोक्यते। तत्र हि हिन्दूनामार्याणां महती दुर्दशा म्लेच्छैः कृता, पञ्चलक्षाधिका आबालवृद्धं हिन्दवो विध्वस्ताः। एका सीता किं? विंशतिसहस्राधिकाः सीतादेव्यो-

×समं अजन्ति—समानभावेन मिलन्ति चत्वारो वर्णाः यस्मिन् सः समाजः इत्यर्थः।

ऽपहृताः पातिताः मर्दिताः भ्रंशिताः म्लेच्छभावमापादिताश्च। आर्याणां गृहवित्तभूम्यादिकं सर्वस्वं बलादपहृतम्। तत्राद्यैकोऽप्यार्यजातीयो जनोऽवस्थातुं न कथमपि शक्नोतीति सांप्रतं प्रसिद्धमेव।

## सिद्धपुरवृत्तान्तः

अस्ति किल ब्राह्मणानां बोहरामुसलमानरूपेण परिणतानामीदृश इतिहासः। गुर्जरदेशस्य प्रसिद्धे सिद्धपुरक्षेत्रे निवसतां ब्राह्मणानां प्राक् विभागद्वयमासीत्। परस्परं द्वेषमिन्दातिरस्कारवैरादिवशात् ते मिथः कलहायमाना आसन्। एकदा यवनसैन्यं तत्र समागतम्। प्रथमविभागस्थितब्राह्मणसमाजेन द्वितीयविभागस्थितब्राह्मणसमाजस्योपरि-इत्थं महान् मिथ्याऽऽक्षेपः प्रसारितः-'यत् तैः कूपनिक्षिप्तगोमांससंपृक्तयवनोच्छिष्टजलपानादिकं विहितम्, अत एव तद्विभागस्थाः सर्वेऽपि ब्राह्मणाः यवना म्लेच्छा एव संजाताः, तेषां ब्राह्मण्यं किं ? हिन्दुत्वमपि सर्वथा विलुप्तं बभूव।' इति। अतः क्षत्रियादिभिः कैरपि हिन्दुभि र्यवनोच्छिष्टजलपानादिकर्तारस्ते ब्राह्मणत्वेन किं हिन्दुत्वेनापि नैव मन्तव्याः। मूर्खाः क्षत्रियादयोऽन्यत्र स्थिताश्च मूढा ब्राह्मणा अपि तेषां द्वेषिणां ब्राह्मणानामीदृशमिथ्यावाक्प्रचारेऽन्धश्रद्धां बद्ध्वा तेषां महतीमुपेक्षां प्रभूतां घृणां तिरस्कारापमानादिकञ्च चक्रिरे। हिन्दुसमाजात् सर्वथा ते तिरस्कृता निराशाश्च भूत्वाऽन्ततो गत्वा स्वकीयं प्राणप्रियं हिन्दुत्वं ब्राह्मणत्वञ्च परित्यज्य यवनगुरुप्रयोजिततत्समाजे मिलित्वा बोहरासंज्ञां च गृहीत्वा ते मुसलमाना यवनाः अभवन्। अद्यापि ते तस्मिन्नेव सिद्धपुरक्षेत्रे यवनवेषभूषादिरूपेण प्रतीयमानाः स्वबन्धून् स्वशत्रुत्वेन परिणतान् कुर्वतां प्राक्कालिकानां तत्र-

त्यानां ब्राह्मणानां विवेकविचारहीनत्वं मूर्खत्वञ्च द्योतयन्तो निवसन्ति, प्राक् ब्राह्मणादिसमाजेन कृतं घोरमनिष्टमिष्टरूपेण संस्मरन्ति। संप्रत्यपि तेषु केचन वयं प्राक् 'दवे' ( द्विवेदी ) इत्युपाधिकाः ब्राह्मणा आसन्, केचन वयं प्राक् 'तरवाडी' (त्रिवेदी)इत्युपाधिकाः, केचन वयञ्च प्राक् भट्ट इत्युपाधिकाश्च आसन्, इत्येवं स्वकीयामुपसंज्ञां परामृशन्तः कथयन्ति। तेषां स्वबन्धूनामीदृशं पतनं दृष्ट्वा परिशिष्टाः ब्राह्मणंमन्याः हिन्दुधर्मरहस्यविदो महान्तं सन्तोषमवापुः। एवमन्येषां क्षत्रियादिहिन्दूनां यवनरूपेण परिणतौ प्रेमसद्भावसंघट्टनादिसद्गुणविरोधिभूतं द्वेषतिरस्कारघृणामौढ्यादिकमेव तत्तदितिहासे कारणरूपेणावलोक्यमानं भवत्येव।

## हिन्दूनां विच्छिन्नभावना

नीचत्वेनास्पृश्यत्वेन च विभाविताः शूद्रातिशूद्रा उच्चवर्णेभ्यः सर्वथा विच्छिन्नाः हिन्दवस्तु यवनसाम्राज्यकाले लोभात् बलाद्वा यवनरूपेण परिणता अभूवन्। तेषामुद्धारायोच्चवर्णाभिमानिनो हिन्दवः कथं प्रयतेरन् ? तेभ्यो विच्छिन्नत्वाद्धेतोः। वर्तमानकाल एवास्माभिः उच्चवर्णाभिमानवतां हिन्दूनां मनोदशा प्रत्यक्षमवलोकिता। गुर्जरदेशस्य नर्मदातीरस्थिते 'अंकलेश्वरपत्तने' महात्मदर्शनसत्संगलाभाय समागतानामुच्चवर्णानां हिन्दूनामीदृशवार्तालापः श्रुतः। कश्चित्कथयति-किं श्रुतं हि भवद्भिः? अमुकस्य तैलनिर्मातु हिन्दोः युवतीं कन्यामत्रत्याः दुष्टाः मुसलमानाः बलादपहृतवन्तः। अपरे ब्राह्मणाः वैश्याश्च स्वमुखेषूपेक्षाभावं प्रदर्श्य प्राहुः—तेनास्माकं का क्षतिः? ( आपणे शुं ? इति गुर्जरभाषायाम् ) अपहरन्तु ते यथेष्टम्। तेषां गुर्जरभाषायां वार्तालापं श्रुत्वा तदग्रावस्थितेन महात्मनो-

क्तम्-यदि ते दुष्टाः मुसलमानाः ईदृशहिन्दुयुवतीकन्याऽपहरण-व्यापारे लाभशालिनो भूत्वा पुनः 'लाभाद् लोभः प्रवर्धते' इति न्यायेन युष्माकं गृहे स्थितां कामपि युवतीं कन्यां वा वधूं वा विधवां वाऽपहरिष्यन्ति, तदाऽपि युष्माभिः तेनास्माकं का क्षतिः ?, अपहरन्तु ते यथेष्टमिति कथयित्वा महतीमुपेक्षां करिष्यन्ति भवन्तः ? निकृष्टहिन्दुसंकटसमये तन्निवारणाय सहायसद्भावशून्यानां भवतामुत्कृष्टहिन्दूनां संकटसमये ते निकृष्टा हिन्दवो भवत्संकटनिवारणायाभिमुखीभविष्यन्ति किम्?। इति श्रुत्वा मौनं भजमानान् तान् महात्मा हिन्दुषु मिथः प्रेमसद्भावसहायसंघट्टनाय दुष्टदण्डप्रदानाय च समुपदिदेश ।

## हिन्दुसमाजः कथं दुर्बलः?

कश्चन प्रतिपादयति-हिन्दुसमाजस्येदृशं दौर्बल्यम् । हिन्दु-समाजोऽस्ति तावत् विविधवर्णानां विविधोपवर्णानाञ्च संग्रह-भूतः परस्परविच्छेदभावविशिष्टः । अत एव केनचित् पृष्टे सति-'कस्त्वमसि ? इति, तदुत्तररूपेणाहममुकवर्णोऽहममुकोपवर्णोऽस्मीति विच्छिन्नभावद्योतकं वचो वदति । यथा कश्चन शिक्खो वा मुसलमानो वा वदति-अहं शिक्खोऽस्मि, अहञ्च मुसलमा-नोऽस्मीति, तथाऽहं हिन्दुरस्मीति संघट्टितभावद्योतकं वचो नैव वदति । अत एव स निश्चयेन जानाति-अहममुकवर्णेभ्योऽमुको-पवर्णेभ्यश्च सुतरां तत्प्रदर्शितबन्धुभावरहितो विभिन्नोऽस्मि । मत्तोऽमुकवर्णा अमुकोपवर्णाश्च मन्निष्ठबन्धुभावरहिताः विभिन्नाः सन्तीति । सति चैवं हीनवर्णा अनुभवन्ति-उत्तमवर्णान् जनान् वीक्ष्य स्वनिष्ठहीनताप्रयुक्तां लज्जाम् । उत्तमवर्णाश्च हीनवर्णान् दृष्ट्वा स्वनिष्ठोत्तमत्वप्रयुक्तमहंकारञ्च येन केन प्रकारेणावि-ष्कुर्वन्तीति प्रायो लोकव्यवहारेऽपि दृश्यते । एवं वर्णादिप्रयुक्त-

विच्छेदभावदाढर्ये सति मयाऽमुकवर्णममुकोपवर्णञ्च परित्यज्यान्यत्र वर्णे चोपवर्णे च न गन्तुं शक्यते। न च मम वर्णे चोपवर्णे चान्येन वर्णेनोपवर्णेन चागन्तुं प्रभूयते। यतस्सर्वथा मिथो विच्छिन्नत्वात्, परस्परं बन्धुभावभ्रातृभावरहितत्वाच्च।

अत एव स अमुकवर्णोपवर्णवान् निश्चयेन जानाति मम संकटसमयेऽन्ये मन्निष्ठबन्धुभावशून्याः वर्णाः उपवर्णाश्च साहाय्यं विधातुं नागमिष्यन्तीति। यथैकस्य शिक्खस्य यथैकस्य मुसलमानस्य च संकटे पतितस्य समुद्धारायाभितो रक्षणाय च सर्वे शिक्खाः सर्वे च मुसलमानाः संमिल्य तत्र बन्धुभावमाविष्कृत्य समागच्छन्ति, तथा। सति चैवं तस्यैकाकित्वात् सहायशून्यत्वाच्च निर्बलत्वम्। तत्र स्वभावतः क्लीबभावभीरुभावौ समुदेतः। अत एव सोऽन्येन म्लेच्छादिना सह युद्धसमये सहायशून्यतया सहसा पलायते, अथवा दौर्बल्यप्रयुक्तमिथ्याचाटुशब्दान् ब्रुवाणः तदधीनतां ततः पराजयञ्चाङ्गीकरोति। दुष्टप्रयुक्तानर्गलगालिप्रदानचपेटिकाप्रदानादिकञ्च मूकभावेन सहते। अतः शिष्टाः प्राहुः—'वर्णोपवर्णभेदाश्च, संप्रदायविभिन्नता। मिथश्चाप्रेमसद्भावः निर्बलत्वप्रयोजकम् ॥' इति।

## तर्कयुक्तिहीनः समाजसंघट्टनविरुद्धः शास्त्रविचारोऽप्यनर्थायैव प्रभवति

अत एव या प्रशस्तवर्णधर्माणामविच्छिन्ना रचना संयुक्तैः पुरुषमुखाद्यवयवैं निरूपिता, सुन्दरवैज्ञानिकपद्धत्याऽऽविष्कृता प्रेमसमभावसमलंकृताऽऽसीत्, सेदानीं भग्नावशेषतयाऽवलोक्यते यत्र तत्र। वर्णानामन्तः आत्मीयतायाः प्रगाढप्रेमसूत्रं यत्प्राक् वैदिकयुगे निहितमासीत्, तदिदं सर्वथा समुच्छिन्नमभवत्।

मर्यादाशृङ्खलारहितो निर्बलः सन् हिन्दुसमाजः असंख्यनीचोच्चजात्युपजातिभिर्विच्छिन्नो विभिन्नश्च बभूव ।

तथापि केचन ब्राह्मणाद्याः हिन्दवो मनागपि पूर्वापरं न विचारयन्ति, देशपारतन्त्र्यधर्मजातिभ्रष्टतादिदुरवस्थायाः कारणमपि नान्वेषन्ते । विकृतमखिलं न संशोधयन्ति, देशधर्मोन्नतिसाधकं नीतियोग्यताऽनुकूलं सर्वजनहितकरमविकृतं पक्षपाताद्यवद्यवर्जितं प्रशस्तं पन्थानं न संगृह्णते । 'देशकालवयोऽवस्थाबुद्धिशक्त्यनुरूपतः । धर्मोपदेशो वक्तव्यो भैषज्यमिव पारगैः ॥' 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' ( मनु० स्मृ० १२।१०६ ) 'मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्, को न ऋषिर्भविष्यतीति तेभ्य एतं तर्कमृषिं प्रायच्छन्, मन्त्रार्थचिन्ताभ्यूहम्×, तस्माद् यदेवं किञ्च अनूचानोऽभ्यूहत्यार्षं तद्भवति ।' (नि० अ० १३।१२) 'केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः । युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥' इत्यादिशिष्टवचांस्यपि--अपक्षपातया धिया नानुसंदधते । मिथः ईर्ष्या-द्वेष-घृणा-विच्छेद (फूट) मौढ्यानौदार्यप्रभृतिभिर्दोषैः अस्माकं कीदृशं पातित्यमभूदित्यपि नेत्रे उन्मील्य न निरीक्षन्ते । विदेशीयाः दुष्टाः यवना म्लेच्छा अस्मदीये पावने आर्यावर्ते भारतवर्षे आनवशताब्दात् कीदृशं नग्नं ताण्डवं नृत्यमकार्षुः, संप्रत्यपि कुर्वन्तीति

---

×वेदमन्त्राणामर्थंचिन्तने अभ्यूहमेव=वितर्कमेव–ऋषिं प्रायच्छन्-प्रदत्तवन्तः । अत एव अनूचानः=विद्वान्-प्रवचनसमर्थः यदेव किञ्चाभ्यूहति=तर्कयुक्तिसंगतमर्थं विनिश्चिनोति, तदार्षं भवति=ऋषिप्रोक्तमेव भवतीत्यर्थः ।

स्पष्टं जानन्तोऽप्यनवधानतां परित्यज्य सावधानतां न साधयन्ति ।

## काश्मीरप्रदेशनिरीक्षणम्

दिल्लीश्वरो यवनसम्राट् बादशाहो विविधलोभबलादिप्रकारैः रमणीयतमे काश्मीरदेशे प्रायशः सर्वान् ब्राह्मणाद्यार्यान् विकृत्य म्लेच्छरूपान् अकरोदिति प्रसिद्धम् । प्राक् तत्र एकोऽपि म्लेच्छो नावातिष्ठत । प्रायः तत्रत्या ब्राह्मणाद्याः आर्या विद्वांसः कवयो विविधशास्त्रप्रणेतारः आसन् । 'भवन्तः अस्मान् विकृतान् संशोध्य पुनरपि हिन्दुजातौ संमिलिताः पावनाश्च कुर्वन्तु, इत्येवं पुरा प्रार्थयमानान् तान् तदानींतनाः पण्डितंमन्याः कतिचित् 'गर्दभाः कथमपि घोटका न भवितुमर्हन्ती' त्यभिधाय तेषां महतीमुपेक्षां चक्रिरे । 'घोटकाः कथं गर्दभा जाताः ? इत्येवं पृष्टास्ते किमपि सदुत्तरं दातुं न प्रभवन्ति । पश्चाद्भूवेन काश्मीरदेशराजेन क्षत्रियप्रवरेण तत्रत्येभ्यः परिशिष्टेभ्यो ब्राह्मणेभ्यः पौनःपुन्येनेदमभिहितमपि–इमेऽत्रत्या म्लेच्छाः शुद्धा आर्या भवितुं वाञ्छन्ति । ते प्रागपि आर्या आसन्, मध्ये बलात्कारेण तेषु मिथ्याम्लेच्छभावप्राप्तौ सत्यामपि तान् सर्वान् संशोध्यार्यसमाजे संमिलिताः कुर्वन्तु भवन्तः । तेषां तत्तद्ग्रामे मयैकमेकं राममन्दिरं विनिर्माय तेभ्योऽहं रामोपासनाय समर्पयिष्यामि । भवद्भि र्गुरुभि र्ब्राह्मणैः तेषां दक्षिणकर्णेषु पावनं हितकरं राममन्त्रं प्रदाय तान् रामप्रियान् रामसंस्कृतिधारकान् आर्यान् कुर्वन्तु । एवं कृते सति,काश्मीरदेशस्य किं?विशालभारतराष्ट्रस्य महान् उपकारो भविष्यति । परन्तु तत्रत्या विद्वांसोऽपि मूढाः ब्राह्मणाः 'म्लेच्छानां शुद्धौ नास्ति किमपि शास्त्रप्रमाणमतः शास्त्रविरुद्धं किमपि कर्तुं वयं न प्रभवामः ।' इत्यभिधाय

स्वमौढ्यमाश्चर्यंकरं प्रदर्श्य राज्ञः. काश्मीराधीश्वरस्यापि हित-कारिणी वाञ्छा तैरवहेलिता । तस्यावहेलनस्य खेदमयं कटुफलं संप्रत्यपि समग्रेण भारतवर्षेण भुज्यते ।

केनचित्तदानींतनेनार्यजातिसंघट्टनराष्ट्रस्वातन्त्र्यप्रेमवता विदुषा 'इन्द्रं वर्धन्तो अप्तुरः, कृण्वन्तो विश्वमार्यम् । अपघ्नन्तो अराव्णः ॥' (ऋ० ९।६३।५) इति वेदवचनं तेभ्यः प्रदर्शितम् । तदर्थोऽपि तेनेत्थं विहितः । यथाहि—इन्द्रं=परमेश्वरं, तदुपदिष्टं समुदारं वैदिकसनातनधर्मं वा स्तुतिभिः सर्वत्र प्रचारै र्वा वर्धन्तः=वर्धयन्तु भवन्त इति कर्तृपदाध्याहारः । अप्तुरः= अद्भिरुपलक्षितानि तद्वत्स्वच्छानि प्रशंसनीयानि शुभकर्माणि कुर्वन्तः-विद्याबलधनादिशक्तिसमुपार्जने प्रयत्नशीलाश्च भवन्तः, विश्वं=समग्रं जगत्, आर्यं=आर्यभावादियुक्तं, कृण्वन्तः= कुर्वन्तु । अराव्णः=विधर्मणो दुष्टान् अनार्यान् अपघ्नन्तः= अपघ्नन्तु—विमर्दयन्तु । परन्तु ते स्वदुराग्रहसमर्थनाय स्वमौढ्य-प्रदर्शनाय च नास्त्ययमर्थः प्रामाणिक इत्यभिदधुः ।

प्रेमसद्भावसंघट्टनयोरभावादेव पूर्वं सांप्रतञ्चाप्यार्यहिन्दु-जातेस्तद्धर्मस्य तद्देशस्य च पारतन्त्र्यादिप्रयुक्तां महतीं दुर्दशा-मवलोकयन्तोऽपि ब्राह्मणाद्या हिन्दवः प्रेमसद्भावाय संघट्टनाय च न प्रयतन्ते । केरलदेशे तत्रत्या येऽस्पृश्याः शूद्रातिशूद्राः ब्राह्मणादिभिः सर्वथोपेक्षिताः आसन्, ते हिन्दुधर्मात् समुद्विग्नाः सन्तः 'मोपलेति' नामधेया दशलक्षाधिका मुसलमानाः संजाताः । तैः स्वतिरस्कारादिप्रयुक्तं प्रतिफलं विधातुं ब्राह्मणादीनां हिन्दूनामुपरि महान् अत्याचारो विहितः । 'मोपलाओ नो उपद्रव' इति नाम्नि पुस्तके स च विस्तरेण केनचित् गुर्जरभाषा-लेखकेन लिखितः, अस्माभिरवलोकितः । 'दुष्टप्रारब्धकर्मग्रह-

विघातादिसम्पादितेयं देशादे दुर्दशा वर्तते, तत्र वयं किं कर्तुं शक्नुमः ? 'अयञ्च युगधर्मो हि वर्तते कस्य दूषणम्। ( भा० मा० ) इत्यादिकमभिधाय देशाभ्युदयाय पुरुषार्थविमुखास्ते पुनरपि प्रमादनिद्रायामभिशेरते। भगवतोऽतिधन्यस्य प्रमाणसार्वभौमस्य वेदस्येमं समुदारं सदुपदेशमपि नाद्रियन्ते।

## वेदोपदेशः

'ते अज्येष्ठा अकनिष्ठ स उद्भिदोऽमध्यमासो महसा वि वावृधुः। सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन॥' ( ऋ० ५।५९।६ ) 'अज्येष्ठासो अकनिष्ठास एते संभ्रातरो वावृधुः सौभगाय। युवा पिता स्वपा रुद्रः एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः॥ (ऋ० ५।६०।५) इति। अयमर्थः—ये जनुषा=जन्मना-उत्पत्त्या, पृश्निमातरः= पृश्नेः—पृथिव्याः—भारतभूमातुः—पुत्राः पृश्निःभूमिर्माता येषां ते इति पृश्निमातरः—पावनभारतभूमिनिवासिनः—भारतमातृभक्ता इति यावत्। 'माता भूमिः पुत्रोऽहं पृथिव्याः।' ( अथर्व० १२।१।१२ ) इति श्रुत्यन्तरात्। कीदृशास्ते सन्ति ? इत्यत आह-दिवः=स्वर्गलोकात् सुजातासः=सु सुष्ठुः संभूताः महर्षीणां पावने धर्मप्रधाने देशे समुत्पन्नाः-शुभसंस्कारपुण्यकर्मसंयुक्ता इति यावत्। 'गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे।' इत्यादिस्मृतेः। पुनः कीदृशास्ते ? उद्भिदः= शत्रूणां—बाह्याभ्यन्तराणामाततायिनामुद्भेदयितारः-विनाशयितारः—शूरवीराः, पुनः कीदृशाः ? अज्येष्ठासः—अकनिष्ठासः=परस्परं ज्येष्ठकनिष्ठभाव—उत्तमाधमभाव—रहिताः, अमध्यमासः=न वा मध्यमाः सन्ति, किन्तु ते सर्वप्रकारैः समाः=समानवैदिकधर्माः समानप्रेमसद्भावाः—समान-

विद्याबलधनक्षमाः, मर्याः=मनुष्याः सन्ति । ते महसा=तेजसा-दीप्त्या,केनाप्यनभिभूतविद्यादिपराक्रमेण विवावृधुः=विवर्धन्तां-शोभनामभिवृद्धिं-प्राप्नुवन्तु । ते सर्वे भद्रपुरुषाः भव्यविचाराः समुदाराः प्रेमसंघबलवन्तो यूयं नः=अस्मान्-भगवत्स्वरूप-देवान्-उपासितुमितिशेषः,अच्छः-साधु यथा स्यात्तथाऽस्मदभि-मुखं-आजिगातन=आगच्छतेत्यर्थः । भ्रातरः=परस्परं भ्रातृ-भूताः-बन्धुभावार्यभाव समानविद्याबलधनसेवाभावाः, सन्तः, सौभगाय=सुभगत्वाय-सौभाग्याय-निखिलमुत्तममभ्यु-दयमासादयितुं, एते वावृधुः=विवर्धन्ताम् । एषां=भवता-मर्याणां पिता=पालकः परमेश्वरः, युवा=नित्यतरुणः-अवि-नाशी, स्वपा=शोभनकर्मा—भक्तरक्षणदुष्टदलनादिरूपाणि यस्य स्तुत्यानि कर्माणि सन्ति, एवंभूतः, रुद्रः=श्रीशंकरः विविधदुःखद्रावकः समुपास्योऽस्ति । सुदुघा=सुष्ठु-दोग्ध्री—जीवननिर्वाहकधनधान्यादिरूपविमलदुग्धसमर्पयित्री, पृश्निः=भारतभूमिः-मातृभूता-सेव्याऽस्ति येषां भवतामर्याणामिति शेषः। अत एव मरुद्भ्यः=भगवद्रूपेभ्यो देवेभ्यः-सुदिना=शोभनदिनानि-कुर्वन्तु भवन्तः । अर्थात महादेवप्रीयते धर्मप्रवचनयज्ञादिरूपान्-उत्सवान्-विधाय, सर्वान् दिवसान् शोभनान् सोल्लासान् रम-णीयान् आनन्दप्रदान् कुर्वन्तु, इति भगवतो वेदस्य शुभाशीर्वा-दोऽयम् । समानप्रेमसद्भावाः मिथः संघट्टिताः भारतराष्ट्रभवताः अवश्यं सर्वविधमभ्युदयमासादयन्त्येवेत्यत्र नास्ति संशयले-शोऽपीति भावः ।

तथा 'संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।' (ऋ० १०।१९१ २। अथर्व० ६।६४।१। तै० ब्रा० २।४।४।४) हे आर्यमानवाः ! पावनभारतभूवास्तव्याः ! यूयं सर्वे संग-

च्छध्वं=मिथः स्नेहसद्भावसहानुभूतिविनयादिसद्गुणैः संयुक्ताः सन्तः, कौटिल्यं विरोधञ्च परिहाय मिथः संमिलिताः संघट्टिता भवत। तथाभूताः सन्त एव स्वाभ्युदयाय राष्ट्रगौरवाभिवृद्धये च प्रगतिशीला भवत इति यावत्; तथा संवदध्वं=सम्यक् अविरोधकरं—राष्ट्रहितसम्पादकं सत्यं प्रियं स्नेहसद्भाववर्धकमेव वाक्यं ब्रूत। यद्वा संघशक्तिसम्पादकं स्वदेशाभ्युदयकरमेकविधमेव वचोजातं परस्परं कथयत। तथाऽऽथर्वणोऽप्याह—'अन्यो अन्यस्मै वल्गु वदन्तः, एत, मा वियौष्ट।' (अथर्व० ३।३०।५) अन्योऽन्यस्मै=परस्परं, वल्गु=शोभनं सत्यप्रियवाक्यं वदन्तः= भाषमाणाः सन्तः, एत=अग्रे—देशाभ्युदयाय गच्छत, यूयं मा वियौष्ट=कदाचिदपि वियुक्ताः पृथग्भूता मिथो विरुद्धा वा मा भवत; किन्तु प्रेमसद्भावाभ्यां सदा संघट्टिता एव भवतेत्यर्थः। तथा वः=युष्माकं मनांसि=चेतांसि, संजानतां=समानमेकरूपमेवार्थं अवगच्छन्तु, यद्यदस्माकमनुकूलं वा प्रतिकूलं वा तदन्येषामपि तथैव भवतीति स्वात्मदृष्टान्तेन सर्वत्र प्राणिजाते सुखदुःखादिकं मानापमानादिकं वा सममेकरूपमेव विजानन्तु इत्यर्थः। 'समानी व आकूतिः, समाना हृदयानि वः।' (ऋ० १०।१९१।४। अथर्व० ६।६४।३) इति। हे आर्याः! सज्जनाः! वः=युष्माकं, आकूतिः=संकल्पः-निश्चयः-प्रयत्नः-व्यवहारः इत्यनेकार्थः। समानी=सरला-अवक्रा-कापट्यादिदोषरहिता--प्रेमसद्भावादिसद्गुणविभूषिता एकविधा अस्तु=भवतु। तथा वः=युष्माकं, हृदयानि=अन्तःकरणानि, समानानि-न तु विषमाणि--राष्ट्रगौरवस्वातन्त्र्याभ्युदयविच्छेदकानि भवन्तु, किन्तु तत्सम्पादकानि समभावप्रेमभावोपेतानि सन्तु। 'समानो मन्त्रः समितिः समानी, समानं मनः सह चित्तमेषाम् (ऋ० १०।१९१।३) इति।

मन्त्रः=गुप्तभाषणं गुप्तयोजना च, समानः=एकविधः समानरूपेण समाजराष्ट्रहितसंपादकः, न त्वनेकविधो भवतु । यद्वा—इष्टलाभायानिष्टनिवारणाय च जपनीयः स्मरणीयः परमेश्वरस्य गायत्र्यादिरूपो मन्त्रोऽपि समेषामार्याणां भारतभूवास्तव्यानां समान एव भवतु, न तु विभिन्नः । समितिः=सभा-परिषत्-विचारगोष्ठी, समानी=एकरूपाऽस्तु । एकस्यामेव समितौ समभावेनैवोत्तमाधमभावरहिताः संमिलिताः सन्तो भवन्तो राष्ट्रहितविचारायावतिष्ठन्ताम् । मनोऽपि मननविचारसाधनं भवतां समानमेव भूयात् । तथा चित्तं=मननादिजं ज्ञानमपि, सह=सहितं, समानार्थलाभसंपादकत्वेन—एकीभूतमेव, एषां=भवतां-एकस्मिन्नेव राष्ट्रहितकार्ये सह प्रवृत्तानाम् ।

एवं भगवतो वेदस्य पक्षपातरहितसमभावबोधकं सदुपदेशं श्रुत्वा मत्वा च दुःस्वार्थ-दुरभिमान-मौढ्यमूलकाः विरोधप्रयोजका राष्ट्रगौरवस्वातन्त्र्यविघातकाः निखिलाः तुच्छा विषमा दुर्भावाः सद्योऽपसारणीयाः, मिथः प्रेमसद्भावमूलकं स्तुत्यं सकलाभ्युदयसाधकं संघट्टनमैक्यं संपादनीयम् । प्रान्तीयभाषाऽवान्तरधर्मव्यवहारादेः कथञ्चित् गौणे भेदे सत्यपि सर्वैरप्यार्य्यैर्हिन्दुभिः प्रशस्तं वैदिकं समनुगतं सनातनधर्ममवलम्ब्य विरोधप्रयोजकाः मिथ्यासंप्रदायभेदा निवारणीया इति ।

## स्वातन्त्र्यपारतन्त्र्ययोः इष्टानिष्टत्वम्

संघट्टनप्रेमसद्भावादिसद्गुणानामभावात् विच्छेदानैक्यद्वेषेर्ष्यादिदुर्गुणानां सद्भावाच्च परतन्त्रस्य भारतराष्ट्रस्य तत्समाजस्य तद्धर्मस्य च महती दुर्दशा जाता । अतः पारतन्त्र्येण तुल्यं नास्ति किमप्यसह्यं दुःखम्, नास्ति किमपि निन्दनीयं मौढ्यम्, नास्ति किमपि तिरस्करणीयं लाघवम्, ततोऽप्यधिका च नास्ति काप्यु-

द्वेजिका हानिः । एवं राष्ट्रसमाजादेः स्वातन्त्र्येण समानं नास्ति किमपि विमलं सुखम्, स्तुत्यं बुद्धिमत्त्वम्, प्रशस्तं गौरवं, अभीप्सितो लाभो वा । यदाह कश्चन विद्वान्-'सुखं परं किं? निजतन्त्रतैव, दुःखं परं किं ? परतन्त्रतैव । वनेषु कीराः सुखिनो भवन्ति, दीनाः पुनः काञ्चनपञ्जरेषु ॥' इति । परन्तु तत्स्वातन्त्र्यं विनयविवेकसंयमत्यागसर्वभूतहितरतिप्रभृतिसद्गुणैर्विभूषितं स्यात् । अत एव भगवता मनुनाऽपीत्थं समुपदिष्टम्—'सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम् । एतद्विद्धि समासेन लक्षणं सुखदुःखयोः ॥' (म० स्मृ० ४।१६०) इति । परवशं=पराधीनत्वं-पारतन्त्र्यमित्यर्थः, आत्मवशं=स्वाधीनत्वं स्वातन्त्र्यमित्यर्थः ।

## म्लेच्छबादशाहानां दौष्ट्यम्, हिन्दुराजानाञ्च दौर्बल्यम्

अत एव विदेशीयस्य विधर्मिणो म्लेच्छबादशाहस्य भारतशासकस्यातीवाधीनाः सन्तः, तद्भयेन सर्वथा सदा व्यथामनुभवन्तो भारतस्य तत्तल्लघुप्रदेशशासकाः क्षत्रियाः सिंहोपनाम दधाना अपि तदानींतनाः राजानः कीदृशाः निर्बलाः स्वप्रशस्तकुलधर्मादिगौरवशून्या अभूवन्, इतीतिहासः तेषां वृत्तं प्रदर्शयति । बादशाहेन षष्टिवर्षीयेण वृद्धेन पलितमुण्डेन श्मश्र्वादितीक्ष्णशुभ्रकेशसमुपेतेन दुष्टेन ते राजानः इत्थं समाज्ञप्ताः भवन्ति-'भवतां प्रासादे वर्तमानानां भवदीयानां सौन्दर्यलावण्यादिसमुपेतानां गौररूपवतीनां षोडशादिवर्षीयाणां कुमारीणां मया सह विवाहः सपद्येव विधातव्यः, नो चेत् भवतां लघुराष्ट्रं विनष्टं भविष्यति । अतः स्वलघुराष्ट्ररक्षणाय स्वसंपत्तिपरित्राणाय च मया वृद्धेनापि बादशाहेन सह भावत्कयुवतिकुमार्याः विवाहो विधेय एवेति' । तत्पराधीनाः अत एव तद्भयेन भीताः स्वराष्ट्र-

संपत्त्यादिरक्षणकामा: जयपुरजोधपुरादिराजा: महादु:खकरं स्वक्षत्रियजातिप्रशस्तगौरवविघातकं तत्कार्यमनिच्छन्तोऽपि अकार्षु:। केचन राजान: एवं कर्तुमशक्नुवन्त: स्वकुमार्या सह गंगाप्रवाहे स्वदेहं विनिक्षिप्यात्मघातमपि विदधुरिति, इतिवृत्तं प्राय: सर्वेऽपि-भारतसमालोचका: जानन्त्येव।

## हिन्दुदेवालयध्वंसादिकम्

एवं विदेशीयैर्दुष्टै:–म्लेच्छैर्बादशाहैर्हिन्दूनां भारतभूमौ स्थितानि पवित्रतीर्थभूतानि बहूनि मन्दिराण्यपि विध्वस्तानि, समाराध्या: श्रद्धेया: देवमूर्तयोऽपि खण्डिता:। श्रीमहादेवस्य द्वादशज्योतिर्लिङ्गेषु-अग्रतो गण्य सौराष्ट्रे स्थितं सोमनाथ-मन्दिरमपि-एकवारं नहि-चतुर्दशवारं तैर्विध्वस्तम्। धार्मिका: ध्वस्तानां मन्दिराणां पुन: पुनर्निर्माणं कुर्वन्त आसन्, ते च दुष्टा: यवना: नीचा: 'न नीचो यवनात्पर:' इत्यभियुक्त-स्मरणात्, पुन: पुनस्तानि विध्वस्तानि चक्रु:। तेषां दुष्टानां दौरात्म्यस्य नास्ति काचन सीमा। 'किमकार्यं दुरात्मनामि' त्युक्तवात्। एवं वाराणसीस्थितस्य काशीविश्वनाथस्य ज्योतिर्लिङ्गस्यापि तै: पावनं मन्दिरं विनाश्य, तत्स्थले निर्मितं मस्जिदं हिन्दूनामार्याणां निर्वीर्यताया: प्रतीकभूतं सदद्यापि वर्तमानं धार्मिकाणां हृदयानि प्रसभं समुद्वेजयति, तद्विध्वस्त-मन्दिरस्याभिमुखस्थितो विशालो नन्दीगण: पाषाणनिर्मितो वृषभोऽपि संप्रति मंदिरं नहि मस्जिदमेवावलोकयन् तत्रत्यानां प्रचुराभिमानभरितानां पण्डितानामुपहासं कुर्वन्निवास्ते।

एवं महादुष्ट:–औरंगजेबबादशाह: मथुरायामयोध्यायाञ्च पुर्यां वर्तमानं त्रिंशत्कोटयधिकरूप्यकैर्विनिर्मितं सर्वेषां हिन्दूनामतीव श्रद्धास्पदं श्रीकृष्णजन्मस्थलमंदिरं, श्रीरामजन्म-

स्थलमन्दिरञ्च विनाश्य तत्तत्स्थले-मस्जिदमेकैकं अद्यापि प्रत्यक्षतो वर्तमानं विनिर्मितवान् ।

## हिन्दुसमाजस्य दैन्यम्

तदानींतनाः कीदृशाः दुर्बलाः परस्परं विच्छिन्नाः संघशक्तिशून्याः मृन्निर्मितजडमूर्तिसदृशाः त्रिंशत्कोटिसंख्याका अपि निष्प्राणाः हिन्दव आसन्। स्वसमक्षं दुष्टनिर्मितधर्मध्वंसलीलां मूका इवान्धा इव, बधिरा इव अब्रुवन्तः अशृण्वन्तःअपश्यन्तश्च सन्तः मृतप्राया इव न किमपि प्रतीकारं कर्तुमशक्नुवन् । तदा वक्तुमशक्यं कुणपमुखे प्रतिभासमानमिव गर्हणीयं दैन्यं सर्वत्र विप्रसृतमासीत् । तदा हि गंगा च यमुना च स्वविलोलतरङ्गैः स्वप्रभूतशोकाश्रूणि विमुञ्चन्तीव प्रवाहिताऽभूत्; तत्तत्तीर्थानि च रोदमानानीव समजायन्त। 'ब्रह्म सत्यं जगन्मिथ्येति' ब्रुवाणाः संन्यासिनोऽपि तद्द्रष्टुमशक्यं दृश्यं दृष्ट्वा हाहाकारमकार्षुः । कृष्ण! कृष्ण! रामरामेति केवलनामजपपरायणाः साधवः रामकृष्णयोर्मानुषविग्रहयोः शत्रुपराजयशीलं पराक्रममस्मरन्तः शृगाला इव भयभीतहृदयाः सन्तः पलायमाना अभूवन् । तदा तु हिन्दूनामार्याणां नाडीषु प्रोष्णं रक्तं शोणितं न प्रवाहितमासीत्, अपि तु मलीनं सदुर्गन्धं जलमेवेति मन्ये ।

## पावागढनिरीक्षणम्

गुर्जरदेशस्थपावागढस्थितस्य श्रीकालिकामंदिरस्यापि शक्तिपीठेषु प्रधानतया गण्यमानस्य म्लेच्छै र्यवनैः कालीदेवीमूर्तिरपि विध्वस्ता, कथञ्चिदवशिष्टं तन्मूर्तिशिरः क्षतविक्षतमपि संप्रत्यप्यवलोक्यमानं समर्च्यमानञ्च वर्तते। परन्तु दंभिनः पाखण्डिनः पुजारिगणाः-इत्थं विपरीतं कथयन्ति-'कुपितया देव्या सहसा भूप्रवेशो विहितः, कस्यचिद्भक्तस्य महत्या

प्रार्थनया देव्याः शिरोमात्रमेव दर्शनायावशिष्टमस्ति । इति ।' तै र्दुष्टैस्तन्मन्दिरस्य शिखरं विनाश्य, तत्र परिशिष्टे शिखरे कस्यचित् मुसलमानपीरस्य दरगाहो विनिर्मितः । मन्दिरस्याधोभागे देवी विराजते,तदुपरि शिखरे च सः कल्पितः पीरो म्लेच्छः कबररूपेणावतिष्ठते । संप्रत्यपि मूर्खाः पुजारिणो ब्राह्मणाः कालीशिरोदर्शनाय समागतान् हिन्दुनरनारीबालयुववृद्धान् समादरेण कथयन्ति-एतस्य मंदिरस्य शिखरे यवनः पीरोऽपि विद्यते, तेन सह देव्याः गाढमैत्रीभावो वर्तते । अत एव तया प्रेम्णा स्वशिखरोपरि तस्य निवासस्थानं दत्तम् । तत्र मुसलमानपुजार्यप्यस्ति, तस्य दर्शनमपि भवद्भिः कर्तव्यमेव, कापि भेटपूजा तत्रापि कर्तव्या । तद्दर्शनेन सकलाः मनोरथाः सिद्ध्यन्तीति । पावागढमंदिरं गतानामस्माकं हृदये तदा महती लज्जा, प्रभूतश्च खेदः समजायत । कीदृशोऽयं गौरवशून्यो विवेकबुद्धिरहितो निर्लज्जो हिन्दुसमाजः ?। यद्वा तद्वा किमपि कथितं सत्यमेव मनुते । उपरिस्थितस्य पीरस्याधःस्थिता देवीमूर्तिः कीदृशी जातेति वक्तुं जिह्वाऽपि प्रभूतां लज्जामनुभवति ।

## भारत एवानन्यसाधारणोदाहरणरूपः

नान्यत्रोपलभ्यते, एतादृशमुदाहरणम्–यथा भारतदेशः । यत्र किलान्यदेशीयाः विजातीयाः विधर्माणः, भारतस्योपरि समाक्रमणं विधाय, विच्छिन्नान् परस्परं कलहायमानान् हिन्दुराजान् विजित्य, भारतं स्वाधीनीकृत्य तस्य धर्मस्थलसंस्कृत्यादिकं विध्वंस्य तन्निवासिनामुपरि स्वच्छन्दं शासनं चक्रुः, ते च दीनाः हीनाः रंकाः वराकाश्च सन्तः, तेषामग्रे विविधं दैन्यं प्रदर्श्य, तान् स्तुत्यादिभिः, स्वकन्यादानादिविविधोपहारैश्च

प्रसाद्य, 'अजाविसारमेयादिसंघवत्' तच्छासनश्रृङ्खलाबन्धनमभीष्टतया स्वीचक्रुरिति ।

अन्यः कोऽपि देशः स्वगृह एव स्वभूमावेव परकीयं विविधं शासनं बन्धनं गौरवविघातकं गर्ह्यमनिष्टञ्च मौनभावेनाङ्गीकृत्यावस्थितो नाभूत् । एक एव भारतदेशः एतादृशप्रभूतलज्जाजनकोदाहरणस्य विषयोऽभूत् । सहस्रवर्षपर्यन्तं बाह्याः विजातीयाः विधर्माणः भारते विशालगृहेऽस्माकं, संप्रविश्य, तत्र स्वस्वामित्वं संस्थाप्य तद्गृहस्थितानां सर्वस्वं स्वसंस्कृतिधर्मगौरवादिकं युवतिकन्यावध्वादिकञ्च बलात्कारेणापहृत्य तान् सर्वथा पराधीनान् अकुर्वन् । नैतावदेव, किन्तु तान् विधर्मणः कृत्वा स्वदेशबन्धुधर्मसंस्कृत्यादिविरोधिनोऽकुर्वन्निति । अत एव ते दशकोट्यधिकाः विकृताः स्वबन्धवः, भारतभूमित एव समुत्पन्नास्तत्रैवावस्थिताः, तयैव संजीविताः भारतं नैव स्वदेशतया पवित्रतया च मन्यन्ते, किन्तु अरबादिविदेशमेव, अन्यदेशीयभाषाभूषासंस्कृत्यादिकं स्वकीयत्वेन, भारतभाषाभूषासंस्कृत्यादिकन्तु परकीयत्वेन च मन्यन्ते । किमाश्चार्यमतः परम् ।

## क्षत्रियाणामपि विवेकविचारहीनता

मुसलमानबादशाहसैन्येषु प्रायः शूरवीराः क्षत्रियाः हिन्दवः एव सम्मिलिता आसन् । त एव स्वबन्धूनां हिन्दूराजानामुपरि समाक्रमणं विधाय तैः सह युद्धमकुर्वन् । यथा महाराणाप्रतापसिंहस्य समक्षं युद्धाय तदीयः सहोदरो लघुभ्राता शक्तिसिंह एव सन्नद्धोऽभवत् । एवं परस्परं द्वेषेर्ष्यावैरादिदोषेभ्यो हेतुभ्यो विच्छिन्नाः क्षत्रिया एव क्षत्रियैः सह युद्धकरणविषये विविधा दृष्टान्ताः भारतेतिहासे समुपलब्धाः सन्ति । यथा जयचन्द्र-

पृथ्वीराजादयः । तेष्वयमेकोऽस्ति दृष्टान्तो लज्जास्पदः—गुर्जरदेशराजः पट्टणाधीशः सिद्धराजो जयसिंहः—यां सौराष्ट्रस्थितजीर्णदुर्गपत्तनस्य राजा विवाहितवान्, तस्याः राणकदेव्याः सुन्दर्याः कच्छदेशराजकुमार्याः कृते महद् युद्धं चकार, तेन स जीर्णदुर्गस्य समग्रं राज्यं नष्टं भ्रष्टञ्चाकरोत् । राणकदेव्याः पतिं राजानं लघुपुत्रांश्च मारितवान् । तया सत्या चिताग्नौ प्रविष्टया तस्मायपरिहार्यः शापो दत्तः, तवापि सर्वस्वं विनष्टं भविष्यति, त्वमपि च महतीं दुर्गतिं प्राप्स्यसीति । अनेन स्वक्षत्रियबन्धुविनाशकारिणा युद्धेन गुर्जरराजेन किं लब्धं ? यस्याः कृते युद्धमीदृशं कृतं, स्वसैन्यादिक्षतिरपि संपादिता, सा सुन्दरी तेन लब्धा किम् ? कीदृशं तस्य बुद्धिमत्त्वं किं वा मौढचम् ? स्वशासितप्रजानामनेन कश्चोपकारः सम्पन्नः ? कीदृशी च कीर्तिः समुपार्जिता? इति विचारणीयम् ।

## चरित्रशिक्षणसमालोचना

तथापि—अत्रत्याः पण्डिताः स्वान् हिन्दुसमाजस्याग्रगण्यान् मन्यमानाः 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरितं शिक्षेरन्, पृथिव्यां सर्वमानवाः ।।' ( म० स्मृ० २।२० ) इति मानवशास्त्रवचनमतिगर्वेण कथयन्तो लज्जाशीला न भवन्तिति महदाश्चर्यम् । परतन्त्रतायाः म्लेच्छकृतदुर्दशायाश्च चरितं यद् भारताग्रजन्मभिरप्युपभुक्तं, तच्छिष्यक्षत्रियवैमनस्यमौढचलक्षणञ्च तत्किं शिक्षेरन् ? समग्रपृथिवीनिवासिनो निखिलाः मानवाः इति न विचारयन्ति ।

तत्र तावदवलोक्यतां बंगादिदेशचरितम् । तत्रत्याः ब्राह्मणादिहिन्दवः उत्तमवर्णाभिमानिनः'कदापि कुत्रापि विधवाविवाहो न कर्तव्यः' इतिशास्त्रवचनमनुसृत्य विधवाविवाहे

निषिद्धे प्रभूतं पापं स्वप्रशस्तकुलगौरवविघातकममन्यन्त। परन्तु ताः एव विधवाः रमणीः युवतीः दुष्टाः म्लेच्छाः अपहृत्य स्वोपभोग्याः स्ववधूः अकुर्वन्, ताभ्यश्च क्षेत्रभूताभ्योऽपत्यानि भूयांसि हिन्दुधर्मसंस्कृतिगौरवादिविघातकानि म्लेच्छरूपाणि उत्पादयामासुः, इत्यत्र किमपि पापं नापश्यन्। प्रत्युत स्वगृहेष्ववस्थिताः भारभूताः विधवा एव समुद्वेजकं महत्पापं म्लेच्छकृतहरणद्वारा विनष्टमिति समीचीनमभूदिति बुद्धिशालिनो हिन्दुधर्मरहस्यवेत्तार उच्चवर्णाभिमानिनो हिन्दवोऽब्रुवन्, महान्तं सन्तोषञ्च प्राकटयन्निति। अत एव बुद्धिशालिनां निवासभूते बंगदेशे हिन्दुभ्योऽप्यधिकाः म्लेच्छाः हिन्दुविधवाभ्य एव संभूताः सन्तः—बंगभंगस्य पाकिस्ताननिर्माणस्य च कारणत्वं भजमानाः आसन्निति सर्वेऽपि प्रायः तत्रत्यमितिवृत्तं जानन्त्येव।

## विधवासमीक्षा

तत्रेदं तावद्विविकेन निर्धारणीयम्। यद्यपि विधवाविवाहः शास्त्रदृष्टया-एककलासदृशं लघुपापमस्ति, परन्तु व्यभिचार-म्लेच्छहरणादिकन्तु षोडशकलातुल्यं महत्पापमस्तीति निर्विवादम्। महतः पापस्य निवारणाय लघुपापकरणमिष्टमेव नानिष्टमिति तत्रत्याः प्राक्कालिकाः धर्मसंमूढचेतसो जना नाविदन्निति। अत एवायमस्ति प्रसिद्धः प्रवादः—'सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डितः।' इति अर्थात् अर्धरक्षणाय सर्वनाशं संपादयति यः, स मूर्ख इत्यर्थः। अतः 'महापापं परिहर्तुं लघु पापं समाश्रयेत्।' इति अर्थात् लघुपापनिवारणाय महत् पापं किमाश्रयेत्? नेत्यर्थः।

यद्यपि वैधव्यमस्ति संयमत्यागादिमण्डितं प्रशस्तसंन्यास-धर्मसदृशं समादरणीयं महाधर्मभूतम्। प्रशस्तस्यास्य धर्मस्य

पालनं तन्महत्त्वं ज्ञात्वैव संयमसद्विचारशीलाः भगवदाराधकाः विधवादेव्य एव कर्तुं शक्नुवन्ति। न सर्वाः, यथा संन्यासधर्मस्य। यास्तु बहिर्मुखाः युवतयो विधवाः स्वगृहेऽपि स्वाभाविकविषयासक्तिविवर्धकान् समाकर्षकोच्छृङ्खलरूपरसशब्दस्पर्शादिव्यवहारान् बहिस्तु (सिनेमादौ) चलचित्रादौ अश्लीलान् तान् सततमनुभवन्ति। ताः वैधव्यधर्मपरिपालने कथं समर्थाः भवेयुः ?

## विषयवासनाप्राबल्यम्

शब्दादिविषयोपभोगवासनायाः प्राबल्यन्तु सर्वैः मनुजैः किं ? प्राणिभिरप्यनुभूयत एव। यदा हि लब्धसंन्यासवैराग्यधर्मपालनदीक्षाः संन्यासिनो विरागिणः साधवोऽपि मठादिसंपत्तिमासाद्य स्वधर्मात्पतिताः भूत्वा लक्षाधिकाः पुत्रकलत्रादिमन्तो गोस्वामिनः संयोगिनो गृहस्था बभूवुः। तदा वराकीणां विधवानान्तु का कथा वक्तव्या भवेत् ?। अपि च पतिहीनां युवतिं विधवां सर्वेऽपि विषयलोलुपाः जनाः प्रार्थयन्त एव, तदुक्तं—'उत्सृष्टामिषं भूमौ प्रार्थयन्ति यथा खगाः। प्रार्थयन्ति जनाः सर्वे पतिहीनां तथा स्त्रियम् ॥' ( म० भा० आदिपर्वणि० १५८।१२ ) इति।

## विविधोदाहरणानि

अत एव बहिर्मुखा युवतयो विधवाः विषयवासनापूर्तय एव स्वेच्छयैव स्वकुलमर्यादाविरुद्धमपि यत्र तत्र स्वसम्बन्धं गुप्तरूपेण वा प्रकटरूपेण वा योजयामासुः योजयन्ति च। यथाहि—रावलपिण्डिपत्तने बङ्गदेशीयमुख्योपाध्यायस्य काचन युवतिः विधवा पुत्री, हिन्दुपंजाबीरजकस्य गृहे तत्पत्नीरूपेण वर्तमानाऽस्माभिरवलोकिता। सा च प्रत्यहं श्रद्धया कथाश्रवणाय तत्स्थलमाजगाम। अस्मानुपेत्य तया मन्त्रदीक्षाऽपि गृहीता। एकदा

तया स्ववृत्तान्तो निखिलोऽपि निवेदितः। भूतपूर्वं विगतं पतिं स्मृत्वा सा विह्वला बभूव। परन्तु-अयं रजको ममाभिनवः पतिः मां न किमपि कष्टं ददाति, सुखमेव ददातीत्युक्तम्। गुर्जरदेशस्थस्तम्भतीर्थे च काचन मृतस्य नागरब्राह्मणस्य विधवा युवतिः मुसलमानाफसरस्य गृहे तद्वधूरूपेणावस्थिता सती भूयांस्यपत्यानि जनयामास, तेष्वेको युवा पुत्रः केनचित् श्रेष्ठिना सहास्मत्समीपे समागतः, तेनास्य पुत्रस्य माता तु गीतां वासिष्ठं वेदान्तञ्च पठति, धर्मशीलाऽस्तीति तस्याः प्रशंसा विहिता, परन्तु तत्पतिस्तु मुसलमानो विद्यते' इत्युक्तम्। एवं गुर्जर-देशस्थधोलकापत्तने केचन हिन्दुच्छात्राः अस्मत्सकाशं समागत्येत्थं वदन्ति स्म। अस्मत्पाठशालायां केचन मुसलमानाः छात्राः अस्मान् प्रति एकस्य हस्तस्यार्धाञ्जलिं प्रसार्य ददतु भवन्तोऽस्मभ्यं पूर्णाः नहि अर्धाः दक्षिणाः, यतोऽस्माकं माता ब्राह्मणी विद्यते, तत्पुत्राः वयं इत्युक्त्वाऽस्माकं ते प्रतिदिनमुपहासं कुर्वन्तीति।

गुर्जरदेशस्य कस्मिंश्चिद् ग्रामेऽस्माभिः स्पष्टतया तथ्यमिदमवगतम्। काचन दूरस्थस्य ग्रामस्य युवतिः विधवा ब्राह्मणी मुसलमानगृहे स्वेच्छयैव तत्पत्नीरूपेण समवस्थिताऽभूत्। तत्राल्पीयांसो दरिद्राः मुसलमानाः, भूयांसश्च विशिष्टाः धनादिसम्पन्ना हिन्दव आसन्। तत्कृते द्वयोः समाजयो महान् विरोधोऽभूत्। अल्पतरा अपि ते मुसलमानाः स्वजनस्य तस्य साहाय्यं विधातुं संघट्टिताः भूत्वा तं रक्षितुं तत्प्रतीकारञ्च कर्तुं सन्नद्धा अभवन्। राजकीयन्यायालये हिन्दुभिः कथितं-हिन्दुविधवामयं मुसलमानो बलात्कारेणापाहरदिति। न्यायाधीशेन सा विधवा पृष्टा—'किमत्र तथ्यमि'ति। तया निर्भयवाचोक्तम्—

बालविधवाऽहं मम श्वशुरगृहेऽतीव पीडिता दुःखमेव दुःखमन्वभवम्, स्वप्नेऽपि न स्वामिनः, न सरसभोजनादेः, न मधुरशब्दादेश्च सुखमन्वभवम् । कटुतमशब्दप्रहारादिभिः-अवमानपरम्परैव दूयमानेन मनसाऽनुभूता । प्रत्यहमश्रुधाराभिः स्वजीर्णमलिनशाटी आर्द्रीकृता । कथमहं वर्णयामि ममावर्णनीयं दुःखम् । अत्र किलाहं सर्वथा सुखमेवानुभवामि । मम शरीरमेव तावदवलोक्यताम्—प्राक् रुग्णस्येवेदमतीव कृशमासीत्, संप्रतीदं पुष्टं स्वस्थं बभूव, तदनुग्रहतोऽहं गर्भिणी जाता । संप्रति पतिसुखमनुभवामि, सन्तानसुखमप्यनुभविष्यामि । इति । तत्तथ्यं वचः श्रुत्वा न्यायाधीशेन ब्राह्मणेनेदृशो निर्णयो दत्तः-'सा स्वेच्छयैवात्र मुसलमानगृहे समागताऽस्ति, न तत्र लेशतोऽपि तस्य बलप्रयोगो विद्यते । हिन्दुसमाजेनात्र किमपि कर्तुं न शक्यते इति । तन्न्याय्यं वचः श्रुत्वा हिन्दुसमाजः प्रभूतां लज्जामन्वभवत् । तया निर्लज्जया दुष्टयाऽस्माकं गौरवज्ञापकं समुन्नतं मस्तकमवनतं कृतमित्यभिधाय स तस्यै विविधाः गालीः ददौ ।

इदमपरमुदाहरणं तावत् पठ्यतां-नासिकपंचवटीकुंभोत्सवावसरेऽस्माभिरियं सत्यघटना तात्कालिकी श्रुता । कश्चित् आर्यसमाजसनातनधर्मोभयप्रियः प्रामाणिको गुर्जरव्यापारी अस्मत्समीपं समागत्येदं कथयामास । अद्यारभ्य मासद्वयात्पूर्वं अस्माभिः श्रुतं-कश्चित् बोहरासंज्ञको मुसलमानो सौराष्ट्रस्य हिन्दुयुवतिविधवां समानीतवान् । तया साकममुकमस्जिदेऽमुकरात्रौ सः यवनविधिना विवाहं करिष्यतीति । वयं चत्वारो हिन्दुयुवानो दण्डादिधराः महाराष्ट्रहिन्दुपुलिसानामपि सहकारं समवाप्य तत्समये तत्राकस्मात् प्रविष्टा अभूम । किमपि युद्धं विधाय तां बलात् केशकलापेन गृहीत्वा विमोकाय बलप्रयोगं

गालिप्रदानञ्च कुर्वंतीं उच्चैः रोदितुमिच्छन्तीमपि तन्मुखं पिधाय तां स्वगृहे समानयाम। सर्वत उपरि एकान्ते स्थाने प्रतिरुद्धां तामस्माकं गृहदेव्यः प्रेम्णा समपृच्छन्। भो भगिनि ! काऽसि त्वं, कस्मात्स्थानात् समागताऽसि। तव पितरौ भ्रातरश्च कुत्र सन्ति ? इति। परन्तु साऽतीव क्रुद्धा भोजनं किं ? चायपानमप्यकुर्वाणाऽस्मभ्यं निर्गलगालीप्रदानं कुर्वाणा ततो विमोकाय सहसा धावमाना 'मां कृपया भवत्यो मोचयन्तु, तेनैव सहावस्थातुमहमिच्छामि, स एव मम प्रियो भर्ताऽस्तीति पौनःपुन्येन च ब्रुवाणा रोदमाना च बलात् प्रतिरुद्धा दिवस-चतुष्टयं न किमपि स्वपरिचयमदात्। अतिप्रेमप्रदर्शनेनासकृत्पृष्टया 'केनचित्सुन्दरेण सम्पन्नेन हिन्दुयुवकेन सह तव पुनर्विवाहं कारयिष्यामो वयं, इत्यादिना प्रलोभितयाऽनिच्छन्त्याऽपि तया 'अमुकस्य वणिजो विधवा पुत्र्यहं, स्वप्रबलेच्छयैवाहं तेन सह समागताऽस्मि मम भ्राता मोहमय्यां नगर्यां डाक्टरोऽस्ति, मम पिता भावनगरे विद्यते, इत्यादिः परिचयः प्रदत्तः। अस्मत्-प्रेषितं तन्मिलनसंवादं समवाप्य तत्पिता तद्भ्रातरश्च तत्र समायाताः, तां गृहीत्वाऽभिजग्मुः। पश्चात् तस्याः का गतिः संपन्नेति वयं न विद्मः इति। अनेन बलात्कारेण संयोज्यमानं वैधव्यं कीदृशमनिष्टं संपादयतीति सूच्यते। वयन्तु मन्यामहे-विषयासक्तानां युवतीनां विधवानां स्वसजातीययोग्यविधुरैः सह योजनं तदनर्थापेक्षया वरतरमेवेति।

एवं कलिकत्तानगरे कस्यचित् मरुप्रदेशश्रेष्ठिनो युवतिः विधवा पुत्री चतुर्विंशतिवर्षीया बी० ए० परीक्षोत्तीर्णा माता-पित्रादिभिः स्वजनैः विधवाधर्मपरिपालनाय स्वकुलमर्यादायाः रक्षणाय च पुनः पुनः प्रेरिता सती साऽस्मत्समीपेऽपि कमपि

सदुपदेशं तस्यै परिग्राहयितुं समानीता। अस्माभिरपि सा बहुधा प्रबोधिता। परन्तु तया—स्वचक्षुषोः रोषं प्रदर्श्य—मृतपत्नीकाः युवानः पुरुषाः कथं न ब्रह्मचर्यं व्रतं परिपालयन्ति? युवतिभिर्विधवाभिः किमपराद्धम्?,मम पितृगृहे श्वशुरगृहे च भ्रातृपत्नीनां भगिनीनां देवर ज्येष्ठ पत्नीनां ननान्दॄणाञ्च विविधवस्त्राभूषणपरिधानकेशविन्यासादिधारणपूर्वकं विलासमयहावभावपरिहासादिकं,तासां मम दुर्भाग्यस्य सूचकान् विलक्षणकटाक्षपातांश्च विलोक्य मम मानसमतीव परिदूयते। कं प्रत्यहं मम प्रभूतां वेदनां निवेदयामि, ममाप्यन्तः का अप्यूर्मयः उच्छलन्ति, अतो हृदयस्य कामप्यव्यक्तां पिपासां, देहस्य च कामपि बुभुक्षां विसंमर्द्याहर्निशं नाहं रोदितुमपि वाञ्छामि; अतो नाहं वैधव्यधर्मपालने समर्थाऽस्मि, न चाहं किमपि गुप्तमनिष्टमाचरितुमभिलषामि। नाहं वराकी संन्यासिनी वा ज्ञानभक्तिवैराग्यशालिनी वा, किन्तु शिक्षिताऽस्मि, ममाभिनवसौभाग्यस्य पुनर्निर्माणे समर्थाऽस्मि। अतोऽहं स्वेच्छयैव पुनर्विवाहं करिष्याम्येवेति मम दृढो निश्चयः। लज्जावशात् मया पित्रादिभ्यः इत्थं नोक्तं, यथाऽत्रोक्तम्, अतो भवद्भिः कृपालुभिः मम पित्रादयः स्वजनाः ममेदृशभावाभिव्यक्तिद्वारा प्रबोधनीयाः—इत्यभिहितम्। एवं संख्यातिगाः दृष्टान्ताः यत्र तत्र विशालभारते विधवानां संमिलन्ति। सति चैवं प्रशस्तस्य संयमप्रधानस्यास्य धर्मस्यापि पालनं बलात्कारेण कार्यमाणं विधवानारीवह्निप्रवेशवत् महतेऽनिष्टायापि प्रभवतीति यत्र तत्र विलोक्यत एव।

अपि च—वर्तमानसमय एव युवतिकामासक्तविधवानां स्वेच्छातो म्लेच्छगृहनिवासो दृष्टो, न प्राक्काले दृष्ट इति न,

किन्तु प्राक्काले धनुर्धरार्जुनसन्निधावपि यादवविषयलोलुपविधवायुवतीनां बलात् स्वेच्छयाऽपि चाभीरै म्लेंच्छैः हिन्दुभिः सह गमनं दृष्टम् । यथाहि-यदाऽर्जुनः सर्वेषां यादवानां विनाशे सति, द्वारकानर्गयाः समुद्रे विलोपे च सति, परिशिष्टाः यादवविधवाः समादायेन्द्रप्रस्थं प्रति गमनं कृतवान् । तदा मार्गे लुण्टाकाः दस्यवो म्लेच्छाः सम्मिलिता अभूवन् । 'कलत्रस्य बहुत्वाद्धि, संपतत्सु ( म्लेच्छेषु ) ततस्ततः । प्रयत्नमकरोत् पार्थो जनस्य ( यादवबहुकलत्रजनस्य ) परिरक्षणे ।' मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः । समन्ततोऽवकृष्यन्त, कामाच्चान्याः प्रवव्रजुः ।। जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ! । धनञ्जयस्तु दैवं तन्मनसाऽचिन्तयत्प्रभुः ।। दुःखशोकसमाविष्टो निःश्वासपरमोऽभवत् । अस्त्राणां च प्रणाशेन बाहुवीर्यस्य-संक्षयात् ।।' ( महाभारतस्य मौसलपर्वणि० अ० ७।५८-५९-६०-६४-६५ ) इति । मिषतां=पश्यतां, प्रमदोत्तमाः=मृतानां यादवानां पतिशोकशालिन्योऽपि युवतयः कामिन्यः । काश्चन बलात्, काश्चनान्याः कामासक्ताः, कामाच्च=विषयोपभोगाभिलाषात् स्वेच्छावशाद्वा, तैः-दुष्टैर्म्लेंच्छैः आभीरैः हिन्दुभिः सह प्रवव्रजुः=अभिसंजग्मुः, इति ।

अत एव ये किल हिन्दवो विधवाविवाहं न कुर्वन्ति, त उत्तमाः, ये च कुर्वन्ति, तेऽधमाः, इति वदद्भिस्तैः-येषां विधवाः मुसलमानादिगृहे गत्वा म्लेच्छसन्तानान् जनयन्ति, ते कीदृशाः भवेयुरिति ? वक्तव्यम् ।

## वृद्धयुवतिविवाहः

अपि चाधिकविधवायुवतिप्रादुर्भावे कारणमपीदमेकम्–वृद्धयुवतिविवाहः शिष्टविगर्हितः । अस्माभि र्विद्यार्थिदशायां

वाराणस्यां बहुत्र दृष्टं पण्डितानां गृहेष्वपि । एकः कश्चन मैथिलः पण्डितो वृद्धः षष्टिवर्षीयो न्यायशास्त्राध्यापकः, यस्य मुण्डं पलितमेव दृष्टं, दन्ताश्च विशीर्णा अवलोकिताः । तेन विंशतिवर्षीयया युवत्या सह विवाहो विहितः । वयं तदा तत्समीपे न्यायशास्त्रमध्येतुमगमाम । यदा चास्माभिः तथा श्रुतं वा दृष्टं वा, तदाऽस्मद्हृदयेऽपि महती ग्लानिरजायत । अतस्तत्समीपगमनमपि सहसा परित्यक्तम् । एवमेको बंगदेशीयः प्रकाण्डपण्डितोऽवलोकितः, तेनापि वृद्धेन युवतिविवाहः समाचरितः । यथा युवानो विद्यार्थिनस्तां न पश्येयुः, सा च तान् न पश्येत्, तथा सः सर्वथा प्रयत्नमकरोत् । एवं एकः कश्चन वृद्धो महान् वैयाकरणः पण्डित आसीत्, यः किल पुस्तकमदृष्ट्वैव, व्याकरणमहाभाष्यं परिभाषेन्दुशेखरं शब्देन्दुशेखरं मनोरमाञ्च कण्ठतोऽध्यापयामास । तेनापि कस्यचित् युवतिकन्या वधूरूपेण समानीता, यदा च पाठशालामध्यापनाय जिगमिषति स्म, तदा तामेकाकिनीमेव स्वगृह एव 'कारागारे पाट्टचरीमिव' कपाटतालादिभिः प्रतिरुध्यैवागच्छत् ।

यदा शास्त्रविदां पण्डितानां गृहेष्वीदृशी दशा वर्तते, तदा विविधैश्वर्यसत्तामदोन्मत्तानां राज्ञां, विस्तृतभूस्वामिनां, धनाढ्यानां तुन्दिलानां श्रेष्ठिनाञ्च गृहेषु का दशा वर्णनीया भवेत् ?। कीदृशोऽयं वृद्धयुवतिविवाहलक्षणोऽन्यायो वाऽत्याचारो वा, युवकेन केनापि पण्डितेन प्रसन्नमनसा जर्जरितया वृद्धया साकं विवाहो विहितः, किं? इति कुत्रापि कदापि दृष्टं वा श्रुतं वाऽस्तीति वर्ण्यताम् । वृद्धेन स्वामिना सह युवत्याः वध्वाः किं पतिस्नेहः प्रादुर्भवति ?। स्नेहं विना सा वैषयिकमपि तुच्छं सुखं लब्धुं शक्नोति किम् ?। एतादृशेनान्यायेनात्याचारेण पीडिता

सा वृद्धस्य वाचारम्भणमात्रेण कल्पितस्य तस्य सर्वथा पतिरूपेणानभिप्रेतस्य मरणादनन्तरं वैधव्यं किं यथावत् पालयितुं समर्था भवति ?। अत एव पण्डिताः स्वनिन्दनीयस्वार्थस्य सिद्धये इत्थं समुपदिशन्ति–'वृद्धो वा रुग्णो वा कुष्ठी वा हीनाङ्गोऽपि वा। विरूपो वा मूर्खोऽपि पति र्न हातव्यो युवत्या कदाचन, एष धर्मः सनातनः ।।' इति। 'वृद्धा वा हीनाङ्गाऽपि वा कुष्टा वा विरूपाऽपिवा। पत्नी न हातव्या यूना पत्यापि कदाचन ।।' इति कथं न तैः तुल्यन्यायेन समुपदिश्यते। 'सदृशीं भार्यामुपेयात्' अर्थात् न तु सदृशं पतिमुपेयात्' इति श्रौतविधिवाक्यन्तु समधीताङ्गलविद्याभ्योऽभिनवसंस्कारविशिष्टाभ्यो वनिताभ्यः प्रदर्शनीयम्। तास्तु स्पष्टतयेत्थं वदिष्यन्ति–वृद्धः षष्टिवर्षीयः सदृशीं भार्यां वृद्धां षष्टिवर्षीयामुपेयात्, न तु युवतिं विंशतिवर्षीयां विसदृशीमिति श्रौतविधिवाक्यार्थं इति।

अत एव बलात्प्रतिरुद्धा तस्या मानसक्षुधालक्षणा विषयवासना, येन केनापि साकं, उत्तमेन वा ऽधमेन वा म्लेच्छेन वा गन्तुं तां प्रेरयत्येव। तथा चोक्तं द्रौपद्याऽपि पाण्डवमहाराज्ञ्या-'पञ्च मे पतयः सन्ति,मह्यं षष्ठोऽपि रोचते। पुरुषाणामभावे हि सर्वाः नार्यः पतिव्रताः ।।' इति। तत्र तस्याः को दोषः? दोषस्तु प्रागेव वृद्धेन पत्या विहितः। 'एकस्मात् गुणात् अपरस्य गुणस्य प्रादुर्भाव इव' एकस्मात् दोषात् अपरोऽपि दोषो नियमतः प्रादुर्भवत्येव।

## विधवाविवाह उचितोऽप्यस्त्यनुचितोऽप्यस्ति

यथा संन्यासधर्मो विरागिणः कृत उचितोऽस्ति, सरागस्य कृते तु सर्वथाऽनुचित एवास्ति। तथा युवतिविधवायाः सकामायाः विषयासक्तायाः कृते प्रभूतानिष्टनिवारणायःपुनर्विवाहः

उचित एवास्ति । विगतपतिविशेषप्रेमाढ्यायाः विषयोपरतायाः निष्कामायाः सत्संगभक्तिज्ञानादिनिष्ठायाः पुत्रादिसन्तानवत्याः कृते पुनर्विवाहः सर्वथाऽनुचित एवास्तीति प्रागपि संक्षेपतो वर्णितम् ।

अत एवैतेषां वेदमन्त्राणां गहनगभीरार्थानामुचितानुचितोभयविधं व्याख्यानं विद्वांसो विदधति-यथाहि-'इयं नारी पतिलोकं वृणाना, निपद्यत उप त्वा मर्त्य ! प्रेतम् । विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥' (अथर्ववेद. १८।२।१। तै० आ० ६।१।१३ ) इति । तत्र तावदनुचितपक्षं प्रदर्शयामः—हे मर्त्य !=मृतमनुष्य ! या नारी=मृतस्य तव भार्याऽस्ति, सा पतिलोकं वृणाना=कामयमाना, प्रेतं=मृतं त्वामुपनिपद्यते=समीपे नितरां प्राप्नोति—अर्थात् सा त्वां—विगतं पतिं सततं विशेषप्रेम्णा चिन्तयन्ती सती स्वहृदये ध्यानप्रभावात् तव सामीप्यमनुभवति । स्वशरीरत्यागानन्तरं पतिलोके पुनरपि तव साहचर्यमेव कामयते । कीदृशी ? पुराणं विश्वं=अनादिकालप्रवृत्तं कृत्स्नं स्त्रीधर्ममनु—क्रमेण पालयन्ती । पतिव्रतानां स्त्रीणां पत्या सहैव वासः परमो धर्मः । तस्यै धर्मपत्न्यै त्वमिह लोके निवासार्थमनुज्ञां दत्त्वा प्रजां=पूर्वं विद्यमानां पुत्रादिकां, द्रविणं=धनं च धेहि=संपादय—वैधव्यधर्मपालनाय पुत्रादिस्वसन्तानरक्षणाय योगक्षेमनिर्वाहकस्वसञ्चितधनसंपादनाय च त्वमनुजानीहीत्यर्थः । अनेन निष्कामविधवायाः पुनर्विवाहनिषेधः स्पष्टतः प्रतीयते ।

संप्रति समुचितपक्षं—हे मर्त्य !=मरणधर्मन् मनुष्य ! इयं पुरोवर्तिनी नारी=युवतिः सकामा स्त्रीः, पतिलोकं=पतिगृहं—पतिस्थानं—वृणाना=सहधर्मचारिणीत्वेन संभजमाना,

पुराणं=पुरातनं—धर्मं—प्रत्यक्षपतिसहचारलक्षणं पालयन्ती । प्रेतं=प्रकर्षेण—इतं—अस्माद्, भूलोकाद् विनिर्गतं—अनु=पश्चात्, त्वा=त्वां उपनिपद्यते=समीपं नितरां गच्छति । अत एव त्वं तस्यै सकामायै तव साहचर्यं प्राप्तायै प्रजां=पुत्रादिरूपां सन्तति, द्रविणञ्च धेहि=प्रयच्छ । अत्र किल मर्त्यसम्बोधनेन 'मृतः कथं सम्बोध्यः स्यात् ?'। 'इह' इति मनुष्यलोकबोधकवचनेन च प्रेतं-पतिं, अनु=पश्चात् त्वामन्यं योग्यं पतिं वृणाना इति योजनेन च सकामायाः विधवायाः कृते स्पष्टतः पुनर्विवाहः प्रतीयते ।

सति चैवं 'मुह्यन्ति यत्सूरयः' (भा० १।१।१) इति यत् श्रीमद्भागवतेऽभिहितं तत्समीचीनमेव । यत्=यस्मिन्—वेदार्थविवेचने, सूरयः=प्रगल्भपण्डिता अपि किमयमर्थः साधुरसाधुर्वेति निर्णेतुं न प्रभवन्तीति यावत् ।

'उदीर्ष्व नार्यभि जीवलोकमितासुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसंबभूथ ।। (ऋ० १०। १८।८। अथर्व० सं० १८।२।२। तै० आ० ६।१।१४) इति । हे नारि ! इतासुं=इताः=गताः असवः—प्राणाः यस्मात् तं गतप्राणं मृतमेतं पतिमुपशेषे=उपेत्य शयनं करोषि । अर्थात् मृतपतिं प्रागनुभूतं विषयोपभोगप्रदं तत्सामीप्यञ्चानुस्मृत्यासहायभूता शोकेनाभिभूता च सती शय्यायां पतिताऽसि । अतस्त्वमस्मात् मृतपतिस्मरणलक्षणात्समीपात् उत्तिष्ठ । तं विहाय जीवलोकमभि=जीवन्तं योग्ययुवकमानवसमूहमभिलक्ष्य एहि=आगच्छ । त्वं हस्तग्राभस्य=पाणिग्राहवतो दिधिषोः=पुनर्विवाहेच्छो द्वितीयस्य पत्युः, एतत् जनित्वं=जायात्वं-भार्याभावं, अभिसंबभूथ=आभिमुख्येन सम्यक् प्राप्नुहि । सति चैवं दिधिषोरस्तीदृशी व्युत्पत्तिः—द्विरूढायाः—द्वितीयवारं विवाहितायाः

स्त्रियाः स्वामी पतिः दिधिषुः। 'भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥' इति। अस्य मन्त्रस्यायमेवार्थः तैत्तिरीयारण्यके सायणाचार्यादिवेदभाष्यकारैरभ्युपगतः। तथा मेधातिथिना भाष्यकारेणापि समर्थितोऽस्ति। अत एव सकामायाः विधवायाः कृतेऽयं मन्त्रः पत्यन्तरविधायकोऽस्तीति निश्चप्रचम्।

अयमेकः समुचितः पक्षः। इदञ्चास्ति-अनुचितपक्षस्यान्यद्व्याख्यानम्—हे नारि !=मृतस्य पत्नि ! जीवलोकं=जीवानां पुत्रपौत्रादीनां लोकं=स्थानं गृहमभिलक्ष्य उदीर्ष्व=अस्मात् स्थानादुत्तिष्ठ। "ईर गतौ" आदादिकः। इतासुं=गतासुं अपक्रान्तप्राणं, एतं पतिं उपशेषे=तस्य समीपे स्वपिषि। तस्मात्त्वम्, एहि=आगच्छ, यस्मात्त्वं हस्तग्राभस्य=पाणिग्राहं कुर्वतः, दिधिषोः=गर्भस्य निधातुः, तव अस्य पत्युः सम्बन्धादागतं, इदं जनित्वं=जायात्वमभिलक्ष्य संबभूथ=संभूतासि-अनुमरणनिश्चयमकार्षीः, तस्मात्तन्निश्चयं विहाय पुत्रादिसन्तोषायागच्छ इति।

'अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम्। अन्धेन यत् तमसा प्रावृताऽऽसीत् प्राक्तो अपाचीमनयं तदेनाम्॥ प्रजानत्यघ्न्ये ! जीवलोकं देवानां पन्थामनुसंचरन्ती। अयं ते गोपतिस्तं जुषस्व स्वर्गं लोकमधिरोहयैनम् ॥' (अथर्व० १८। २।३–४) इति। इदमुचितपक्षे व्याख्यानम्—युवतिं=यौवनमदोन्मत्तां, जीवां=जीवन्तीं—ग्राम्यसुखेन सह जीवितुमभिलषन्तीं, मृतेभ्यः-नीयमानां=त्यक्तप्राणेभ्यः—मृतपतिसकाशादतिदूरे प्राप्यमाणां, परिणीयमानां=तत्प्रबलेच्छामनुरुध्यान्येन तरुणेन तया स्वीकृतेन पत्या सह परिणयेन—विवाहेन संयुज्य-

मानां, अहं मन्त्रद्रष्टा महर्षिः अपश्यं=पश्यामि—अवलोकयामीत्यर्थः। यत्=यस्मात् या विधवा नारी प्राक् अन्धेन तमसा-अज्ञानशोकादिलक्षणेन प्रावृता=प्रकर्षेण वेष्टिता समाक्रान्ता आसीत्,तत्=तस्मात्,तामेनां, अपाचीं=मृतपतिसकाशात् अपाङ्मुखीं-पराङ्मुखीं कृत्वा,अर्थात् अस्मदभिमुखीं,प्राक्तः=पूर्वदेशात्, प्रगतिशीलो वा अनयम्=प्रापयामीत्यर्थः। हे अघ्न्ये! अहन्तव्ये!-तदभिलषितविषयसुखहननायोग्ये ! जीवलोकं=जीवतां-युवक-युवतीनां लोकं=मिथः स्नेहसुखार्पणादिपूर्वकं दर्शनं 'लोकृ दर्शने स्मरणात्' प्रजानती=प्रकर्षेण तल्लाभेच्छाजनकज्ञानयुक्ता सती, देवानां=मिथुनेन सञ्चरतां पन्थां मार्गं, अनुसञ्चरन्ती=सदाऽनुसरणं कुर्वती, अयं=समक्षं वर्तमानः गोपतिः= गवामिद्रियाणां पतिः समर्थस्तरुणस्तव पाणिगृहीता द्वितीयः स्वामी वर्तते, तं जुषस्व=प्रीत्या सेवस्व। एवं ग्राम्यसुखादिप्रदानेन स्वर्गं लोकं तत्र त्वमधिरूढा सती तं पतिमपि अधिरोहयेत्यर्थः। कामिकामिन्योर्विषयसुखतल्लीनतैवात्र स्वर्गाधिरोहः प्रत्येतव्यः। एवमनुचितपक्षोऽपि कथञ्चित् विद्वद्भिर्व्याख्येयः, विस्तरभयादुपरम्यते।

एवं 'विधवेव देवरम्।' ( ऋ० १०।४०।२ ) 'देवरः कस्माद् द्वितीयो वर उच्यते' (निरु० अ० ३।१५) 'नारी तु पत्यभावे वै देवरं कुरुते पतिम्।। (म० भा० १३।१२।१६) इत्यप्यनुसंधेयमुचितपक्षे। यथा विधवा=मृतभर्तृका नारी देवरं=भर्तृभ्रातरं संभोगलाभायाभिमुखीकरोति तद्वदित्यर्थः।

## अर्जुनस्य विधवाविवाहस्ततः पुत्ररत्नोत्पत्तिश्च

महाभारतस्य भीष्मपर्वणि नवतितमे—( ६० ) ऽध्याये किलेदं वर्ण्यते—'अर्जुनस्य सुतः श्रीमान्, इरावान् नाम वीर्य-

वान् । सुतायां नागराजस्य जातः पार्थेन धीमता ।।७।। ऐरावतेन सा दत्ता अनपत्या महात्मना। पत्यौ हते सुपर्णेन कृपणा दीनचेतना ।।८।। भार्यार्थं तां च जग्राह, पार्थः कामवशानुगाम् । एवमेष: समुत्पन्नः परपक्षेऽर्जुनात्मजः ।।९।। सुपर्णेन= गरुडेन । पतिवियोगे सति युवतिविधवायाः अपत्यरहितायाः कृपणात्वदीनचेतनात्वविशेषणाभ्यां दासदासीसरसभोजनोत्तमनिवासप्रभूतधनादिप्रयुक्तसुखसत्त्वेऽपि पतिप्रयुक्तप्रकृष्टसुखाभावात् प्रभूतदु:खानुभवलक्षणा दुर्दशा सूच्यते। कामवशानुगामिति विशेषणेन कामासक्तायास्तस्याः पुनर्विवाहोऽर्जुनवत् समुचितत्वात्समादर्तव्य इति बोध्यते। 'परपक्षे समुत्पन्नः' इत्यनेनासवर्णविवाहोऽपि द्योत्यते। अर्जुनस्यार्यवर्णत्वात् तस्याः नागराजसुतायाः तद्भिन्ननागवर्णत्वात् तयोरसवर्णत्वम् । 'स नागलोके संवृद्धो मात्रा च परिरक्षितः ।।१०।। रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः। इन्द्रलोकं जगामाशु, श्रुत्वा तत्रार्जुनं गतम् ।।११।। सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः ।। न्यवेदयत चात्मानमर्जुनस्य महात्मनः । इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो! ।।१३।। मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् । तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः ।।१४।। परिष्वज्य सुतं चापि आत्मनः सदृशं गुणैः । प्रीतिमाननयत् पार्थो देवराजनिवेशने ।।१५।। इन्द्रभवने इत्यर्थः। 'सोऽर्जुनेन समाज्ञप्तो देवलोके तदा नृप! । प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत! ।।१६।। युद्धकाले त्वयाऽस्माकं साह्यं देयमिति प्रभो!। बाढमित्येवमुक्त्वा तु युद्धकाले इहागतः ।।१७।। साह्यं= साहाय्यं । तेन पराक्रमिणा—इरावता कुरुक्षेत्ररणसंग्रामे शकुनेः

भ्रातरो युद्धदुर्मदा गान्धाराः सद्यो विनिहताः, पश्चात् तमिरावन्तं न्यहनद् अलम्बुषनामा कश्चित् राक्षसोऽसिना। 'सकुण्डलं समुकुटं पद्मेन्दुसदृशप्रभम्। इरावतः शिरो रक्षः पातयामास भूतले॥ तस्मिंस्तु विहते वीरे राक्षसेनार्जुनात्मजे। विशोकाः समपद्यन्त धार्तराष्ट्राः सराजकाः॥७८॥' इति। अनेन वर्णनेन स्पष्टं विज्ञायते-अर्जुनस्य विधवया सह विवाहः, तत्समागमेन पुत्ररत्नोपलब्धिश्चेति।

## केरलदेशाग्रजन्मचरितम्

निरीक्ष्यतां तावत् केरलदेशीयानामग्रजन्मनां नम्बुद्रिसंज्ञकानां चरितम्। जनार्दनक्षेत्रे शंकरन्–नम्बुद्रिनामा कश्चनाध्यापकः, अस्मत्-सकाशं समागत्य तत्रत्यमार्यसंस्कृतिविरुद्धमनार्यचरितमित्थं वर्णयामास। अत्रत्या अग्रजन्मानो विप्राः 'कलावाद्यन्तयोः स्थितिरि' ति तन्निर्णयानुसारेण क्षत्रियगुणकर्माढ्यानामपि नायराणां ( नायकानां ) तैः शूद्रत्वेनाभिमतानां कन्याभिर्युवतिभिः सुन्दरीभिर्न तु विधिवद्विवाहं, किन्तु भार्यासम्बन्धं स्थापयन्ति। ते तु निशासु तत्कन्यापितृगृहं गत्वा ताः यथेष्टमुपभुञ्जते। तासु भूयांसः पुत्रादीन् जनयन्ति। नायरा अपि प्रसन्ना भवन्ति, स्वकन्यानां दानमस्माभिर्विप्रेभ्यः कृतमिति हेतोः। ताः तत्सम्बन्धिताः स्ववधूरूपेणाङ्गीकृताः तद्विप्रपतिगृहे नावतिष्ठन्ते। यदि कदाचित् कार्यवशात् तद्गृहं गच्छन्ति, तदा शूद्रदासीवत् पाकशालादौ भोजननिर्माणाय प्रवेष्टुं नार्हन्ति। स च शंकरन्–नम्बुद्रिः पुनरप्युवाच। पश्यन्तु तावत्–अस्माकमुपहासास्पदं पावित्र्यम। वयं ताः शूद्रकन्याः उपभोग्यवधूरूपेण स्वीकुर्वाणा अपि, ताभ्यः शुभसन्तर्ति जन-

यन्तोऽपि तद्धस्तगृहीतं जलमपि न पिबामः, कुतस्तत्करनिर्मित-भोजनादिकं भोक्तुं शक्नुमः।

अस्माकं कुलेषु सुदृढोऽयं नियमो वर्तते, यो भ्रातृषु ज्येष्ठोऽग्रजो भवति, स एव ब्राह्मणकन्ययैव साकं विवाहं कर्तुं शक्नोति, स एव पितुर्विस्तृतभूमिविशेषसम्पत्तिस्वामित्वमधिगच्छति, नान्येऽवरजाः सहोदरा भ्रातरः। ते तु नायर-कन्याभिः सह स्वोपभोग्यभार्यासम्बन्ध स्थापयन्ति, केवलजीवननिर्वाहौपयिकधनधान्यादिकमेव लभन्ते नाधिकम्। अग्रजानामल्पत्वात्, अवरजानामधिकानामन्यत्र सम्बन्धितत्वाच्च परिशिष्टाः युवतयो ब्राह्मणकन्याः अविवाहिता एव तिष्ठन्ति। काश्चन विषयवासनाप्रेरिताः यद्वा तद्वा किमपि वक्तुमनर्हं समाचरन्ति। अन्यत्र वा विजातीयक्रिश्चियनादिसमाजे संमिलिता भवन्ति। यतः केरलप्रदेशे मोपलामुसलमानसमाजवत् तत्समाजोऽपि अत्यधिको वर्तते। संप्रत्येव समाचारपत्रेषु पठितं—कन्याकुमारीक्षेत्रे विश्वमान्यस्वामिविवेकानन्दस्य पुण्यस्मृत्यर्थं स्थापिता ज्ञानशिला तैर्दुष्टैर्विनाशितेति। यतः तत्रापि हिन्दुभ्यः तेषामत्यधिका संख्या, विशालः चर्चोऽपि च विद्यते। अपि चास्मभ्यं ब्राह्मणेभ्यो नायरकन्यासु समुत्पन्नाः पुत्राः पुत्र्यश्च न पितृब्राह्मणजातिं लभन्ते, किन्तु योनिप्राधान्यमभ्युपगम्य, न तु बीजप्राधान्यं, तन्मातृजातिमेवेति। मद्रपुर्यां कश्चन हिन्दुहोटलस्य कर्मकरः श्रद्धाढ्यः पन्निकरसंज्ञको युवा नायरोऽस्मत्सकाशं ब्राह्मणेन शिखायज्ञोपवीतभस्मरुद्राक्षविभूषितेन स्वजनयित्रा पित्रा सह समागतोऽभूत्। तेनाङ्गुलीनिर्देशेनोक्तमयं मम जनकः पिता ब्राह्मणोऽस्ति, अहन्तु तत्पुत्रस्तज्जन्योऽपि यज्ञोपवीतादिद्विजसंस्काररहितः शूद्रोऽस्मीति।

त्रावनकोर---( अनन्तशयनपत्तन ) कोचोनादिराजानां कुलेष्वपि, एतादृशो नियमो वर्तते, राजकन्यानां ब्राह्मणैः सह सम्बन्धो भवति, तेभ्यस्तासु समुत्पन्ना एव कुमाराः राजसिंहासनाधिकारिणो भवितुमर्हन्ति, न तु राजभिः क्षत्रियैः स्वधर्मपत्नीराजमहिषीषु समुत्पन्नाः राजकुमारा, ते तु तेषां ब्राह्मणंमन्यानां दृष्टिभिः शूद्राः एव सन्तीति कथं तदधिकारिणो भवेयुः ? यतः सर्वेऽपि राजकुलपुरुषाः समानगोत्रोद्भूवत्वेन हेतुना तत्कन्यानां ब्राह्मणा एव पाणिग्रहणं कुर्वन्ति, राजकुलोद्भूवास्तु पुरुषा नायरकन्यानां सुन्दरीणाञ्च । तासु समुत्पन्नाः योनिप्राधान्यमभिलक्ष्य तज्जन्या अपि कथं क्षत्रियाः भवेयुरिति तदभिप्रायः । अस्माभिस्तदा विचारितम्—कीदृशमत्रत्यानां दाक्षिणात्यानामग्रजन्मनां चरितं शिक्षेरन् उत्तरभारतपृथिवीनिवासिनो हिन्दवः? । यदाऽस्माकं राष्ट्रस्य प्रियभारतस्य सद्गुणशालिनी स्वतन्त्रता स्थायिनी भविष्यति, मिथः प्रेमसद्भावविनयविवेकादिसद्गुणयुक्तं विद्याबलपराक्रमधनैश्वर्यकलाकौशल्यादिगौरवसमुपेतमेकभावभ्रातृभावमण्डितं सुदृढं प्रशस्तमार्यराष्ट्रं भविष्यति, तदा वयं 'स्वं स्वं चरितं शिक्षेरन् पृथिव्यां सर्वमानवाः ।' इति मानवं सूक्तं हर्षेण गातुं शक्ष्यामः इति वयं मन्यामहे ।

## योनिबीजप्राधान्यविचारः

पुराणादिष्वपि नास्ति निर्णयः-योनिप्राधान्यस्य वा बीजप्राधान्यस्य वा । यदि बीजप्राधान्यमभ्युपगम्येत, तदा व्यासपुत्रेण भगवद्भक्तेन नीतिनिपुणेन विदुरेण किमपराद्धम् ? । स्वपितृव्यासादिवत् तुल्यन्यायेन तस्य कथं न ब्राह्मण्यव्यपदेशः संजातः ? । यदि योनिप्राधान्यं

तत्राभ्युपगम्य मातुः दास्याश्च शूद्रत्वमभिलक्ष्य तस्य शूद्रत्वमभ्युपगम्येत, तदा व्यासादिष्वपि तथा स्यात्। यतो व्यासस्यापि माता नाविकमल्लाहपुत्री मत्स्योदरी शूद्रैवास्ति। सा हि पराशरात् महर्षेः व्यासस्य पुत्रस्य प्रादुर्भावानन्तरं शन्तनोः क्षत्रियस्य सम्राजो महाराज्ञी क्षत्रियाणी 'सत्यवती'–त्यपरपर्याया बभूव, विचित्रवीर्यादीन् क्षत्रियान् पुत्रान् राजकुमारान् जनयामास। परन्तु केरलदेशे न बीजप्राधान्यमपि तु योनिप्राधान्यमेवाभ्युपगम्यते, अत एव पुत्राः पुत्र्यश्च स्वपरिचयाय प्रायो मातृनामनिर्देशं कुर्वन्ति, मातुः उपसज्ञां धारयन्ति, न च पितृनामनिर्देशं न च पितुः। अत एव पुत्रास्तदीयाः वदन्ति–मम पिता पन्निकरोऽस्ति, परन्त्वहन्तु मेननोऽस्मीति, मातुर्मेननरूपोपसंज्ञाविशिष्टत्वात्। अत एव ब्राह्मणजन्याः पुत्राः न स्वजनकपितृसंपत्तिमादातुं समर्था भवन्ति, किन्तु मातुलगृहे वर्धिताः रक्षितास्ते भागिनेयाः मातुलसम्पत्तिमेवोपभोक्तुं प्रभवन्ति। तथा चोक्तं महाभारते कर्णपर्वण्यपि– 'तस्मात्तेषां भागहराः भागिनेयाः न सूनवः।' (अ० ४५।१३) इति।

## अग्रजन्मनो विविधार्थनिरूपणम्

अत एव मानवार्षभाष्ये हि–अग्रजन्मनो संकुचितार्थस्य श्रेणिविशेषार्थस्य च निवारणाय विस्तृतोचितविविधार्थबोधनाय चेत्थं निरूप्यते। तथाहि–(१) 'अग्रे=प्राग् यस्य जन्मासौ, अग्रजन्मा निरुच्यते। परजत्वाऽग्रजन्मत्वे स्यातां सप्रतियोगिके॥ अग्रत्वमिह सर्वेषां परत्वापेक्षिकं मतं। सर्व एवाग्रजो लोके स्वापेक्षोत्तरजन्मनः॥ तस्मादत्राग्रजन्मेति वृद्धवर्गोऽभिधीयते। भवन्त्येव समाजेषु सर्वदैवाग्रजा नराः॥ सदैवाग्रज-

वृद्धानां परजेषूपदेष्टृता। प्रकृत्यैवेष्यते लोके चेयमस्ति परम्परा ।। शास्त्रेऽपि भूयसा ( बहुधा ) प्रोक्ता श्रेयसी वृद्ध-देशना। वृद्धसेवैव चादिष्टा विद्यासामस्त्यसिद्धये ।। (वृद्धाश्च विविधाः प्रोक्ताः, ज्ञानवृद्धाः पराः मताः। वयसैवात्र वृद्धत्वं नाभ्युपगम्यते यतः ।।) (२) चातुर्वर्ण्येऽग्रजातत्वात्, ब्राह्मणश्चाग्रजः स्मृतः। इत्थं केचिद्बुधाः प्राहुः, सोऽयमर्थोऽपि युज्यते ।। 'मातुरग्रेऽधिजननाद्' अग्रजन्मत्वमिष्यते। भावि-ब्राह्मण्यसंस्कारैरभिजातस्य जन्मतः ।। (३) त्रिगुणेष्वग्रजो ज्येष्ठः, श्रेष्ठः सत्त्वगुणो मतः। ज्ञानात्मा तत्प्रधानत्वाद् विद्वत्स्वग्रजतोचिता ।। (४) अग्राद् अर्थात्प्रधानाङ्गाद् विराजो ब्रह्मणो मुखात्। जन्मास्येत्यग्रजन्माऽसौ, इत्यर्थोऽपि बुधैः स्मृतः ।। अत्रार्थे त्वग्रजन्मत्वं, नूनमारोप्यते नृषु। मुखकर्मो-पदेशादि-साधर्म्यादिति दर्शितम् ।। वस्तुतस्तु मुखाज्जन्म, नैव श्रुत्याऽवगम्यते। 'ब्राह्मणोऽस्य मुखमासीद्' इत्येवास्ति श्रुतौ स्फुटम् ।। ब्रह्मणो विश्वरूपस्य मुखं ब्राह्मण इत्ययम्। अर्थः स्पष्टतरस्त्वत्र स्थूलबुद्ध्यापि बुध्यते।। मुख्यत्वान्मुखसादृश्यात्त-द्गुणकर्मरूपणात्। 'मुखं ब्राह्मणः' इत्युक्तं न तज्जन्यतया श्रुतौ ।। (५) चातुर्वर्ण्यविभागोऽस्ति, कायव्यूहानुसारतः। समाजाग्रज इष्टोऽतः शरीराग्रजरूपणात् ।। जन्मकाले नृणामग्रे शिर एव प्रजायते। अन्याङ्गापेक्षया तस्मात्प्रत्यक्षमग्रजं शिरः।। ज्ञानस्थानन्तु मस्तिष्कं, तस्याधिकरणं शिरः। ज्ञानेन्द्रियसमूहस्य चाधिष्ठानं शिरो मतम् ।। ज्ञानसम्बन्धिकर्मार्हं, मुखं चास्ति शिरःस्थितम्। तस्मात्तस्याग्रजन्मत्वं रूपकाच्चोपचर्यते।। ब्रह्मणो वेदसंज्ञस्य मस्तिष्केण विधारणात्। ब्रह्मरन्ध्राश्रय-त्वाच्च शिरो ब्राह्मण उच्यते ।। तद्रूपारोपतो ज्ञानप्रधानेषु

नरेष्वपि । ब्राह्मण्यमग्रजत्वं च शास्त्रोक्तमुपपद्यते ।। तस्मादत्राऽग्रजन्मेति ज्ञानवानिष्यते नरः । तत्सकाशात् स्वचरितं शिक्षेरन् सर्वमानवाः ।। (६) अग्रजन्मेति शब्देन जनतास्वग्रयायिनः । पुरुषाश्चोपलक्ष्यन्ते ये हि लोकपुरोहिताः।। 'पुरो'- ऽग्रे लोकनेतृत्वे हिता एव 'पुरोहिताः' । श्रद्धिताः स्वस्तिकर्तारः, न श्राद्धाद्युपजीविनः ।। (७) 'अग्रे' सर्गस्य वाऽऽरम्भे, नृसृष्टिः प्रथमाऽभवद् । अत्रैवा–( भारते–आर्यावर्ते ) ऽतोऽग्रजन्मानः एतद्देशप्रसूतयः ।। अन्यदेशेषु ये पश्चाज्जातास्तेऽवरजाः स्मृताः। तच्छिक्षा तूचितैव स्याद् एतद्देशाग्रजन्मनः ।। (८) अग्रजन्मेति शब्देन वेदो वाऽत्र विवक्ष्यते । संसारवाङ्मयस्याग्रे वेद एवोदपद्यत ।। एतद्देशे ह्यभूदग्रे वेदजन्मेति वर्णनात् । एतद्देशाग्रजन्मत्वं वेदस्यात्रोपपद्यते ।। एतद्देशप्रसूतोऽसौ वेद एव पुरातनः । पुरातत्त्वानुसन्धानान्निश्चितो विश्ववाङ्मये ।। तत्प्रभावोन्मिषज्ज्ञानैरन्यत्रापि महीतले । नानाभाषामया ग्रन्थाः, विद्वद्भिः स्युः प्रकाशिताः ।।'

## सर्वत्र सद्विद्याप्रचारः कर्तव्यः

अत एव–'एकाग्रमनसः शान्ताः, मुनयः संयमे रताः । वेदान् अर्थत आलोच्य, लोकानां हितकाम्यया ।। इदं श्रेयः इदं ब्रह्म इदं हितमनुत्तमम् । अवगम्यातो महाभागाः, शास्त्राणि च प्रचक्रिरे ।। अतो भारतवर्षस्य या जगद्गुरुता स्मृता । सेतिहासपुराणेषु लोके साक्षाच्च दृश्यते ।। पुरा मेरुप्रदेशस्थः, शुकोऽत्र मिथिलां पुरीम् । आगत्य जनकात् सम्यग्वेदान्तार्थमधीतवान् ।। 'एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः । पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं पृथ्वीं ससागराम् ।। स गिरींश्चाप्यतिक्रम्य, नदीतीर्थसरांसि च । बहुव्यालमृगाकीर्णा

ह्यटवीश्च वनानि च ।। मेरो र्हरेश्च द्वे वर्षे, वर्षं हैमवतं ततः । क्रमेणैवं व्यतिक्रम्य भारतं वर्षमासदत् ।। स देशान् विविधान् पश्यंश्चीनहूणनिषेवितान् । आर्यावर्तमिमं देशमाजगाम महामुनिः ।।' (म० भा० शां० अ० ३२५ । श्लो० १२-१३-१४-१५ ) पृथिव्यामिति निर्देशात् सर्वदेशनिवासिषु । विद्याप्रचार आदिष्टो भारतीयाऽग्रजन्मने ।। अतोऽत्रत्या महाभागाः, विवेकानन्दस्वामिनः । रामतीर्थाश्च बहवो विदेशान् प्रययुर्मुदा ।। पृथिव्यां हि समाविष्टं समस्तं वसुधातलं । एवं मनुष्यमात्रार्थे प्रयुक्ताः सर्वमानवाः ।। तस्मात् सर्वमनुष्येषु विद्याप्रचार इष्यते । निर्विशेषात्समैवास्ति सर्वत्र मनुदेशना ।। सर्वदेशमनुष्येषु स्वविद्याप्रथनं तथा । स्वीयग्रन्थप्रचारं च, को न वाञ्छति बुद्धिमान् ? ।। लोकशिक्षाप्रचारार्थी विद्यादानपरायणः । सद्गुरुः सुतरामेव निष्पक्षमुपदेक्ष्यति ।। लोकसंग्रहदृष्ट्याऽपि सर्वेष्वेव समं नृषु । विद्यादानस्य धर्म्यत्वं सत्कार्यत्वं च गम्यते ।। एतद्देशे पुराऽग्रे ये, संजाता आर्यपूर्वजाः । 'कृण्वन्तो विश्वमार्यं' ते विसस्रुः पृथिवीतले ।। एतदत्र पुरातत्त्वं सूचयन्भगवान् मनुः । सर्वदा लोकशिक्षार्थं नियुंक्ते भारताग्रजान् ।। इति । अत एव'आर्यभावप्रचारेण, भक्तिविद्याप्रचारतः । शकाश्च यवाना हूणा अन्ये चाप्यन्यधर्मिणः । वैदेशिका विजातीया-श्चार्यवर्णे प्रवेशिताः ।।

## अग्रज-ब्राह्मण-लक्षणानि

महाभारते शान्तिपर्वणि महाराजो युधिष्ठिरो वैशम्पायनमहर्षिं पप्रच्छ—'धर्मराज उवाच'—'के च ते ब्राह्मणाः प्रोक्ताः ? किं वा ब्राह्मणलक्षणम् ? । एतदिच्छामि भो ! ज्ञातुं तद्भवान् व्याकरोतु मे ।।' इति । वैशंपायन उवाच—क्षान्त्यादिभिर्गुणै-

युक्तः, त्यक्तदण्डो निरामिषः। न हन्ति सर्वभूतानि, प्रथमं ब्रह्मलक्षणम् ॥' क्षान्तिः=क्षमा, आदिपदेन दया-दम-संतोषादयः। त्यक्तदण्डः=क्रोधद्वेषवैरादिरहितः, निरामिषः=परित्यक्ततामसाद्याहारः। न हन्तीत्यनेनाहिंसाव्रतं तस्य बोधितम्। यदा सर्वं परद्रव्यं,पथि वा यदि वा गृहे। अदत्तं नैव गृह्णाति, द्वितीयं ब्रह्मलक्षणम् ॥' अनेन लोभचौर्याभावः सूच्यते। 'त्यक्त्वा क्रूरस्वभावन्तु निर्ममो निष्परिग्रहः। मुक्तश्चरति यो नित्यं तृतीयं ब्रह्मलक्षणम् ॥' मुक्तः=निःस्पृहो निर्द्वन्द्वः सन् चरति=सर्वत्र विचरति सर्वदा, नैकत्र तिष्ठति। 'देवमानुषनारीणां तिर्यग्योनिगतेष्वपि। मैथुनं हि सदा त्यक्तं चतुर्थं ब्रह्मलक्षणम् ॥' अनेन पूर्णं ब्रह्मचर्यं तल्लक्षणतया द्योत्यते। 'सत्यं शौचं, क्षमा शौचं, शौचमिन्द्रियनिग्रहः। सर्वभूते दया शौचं, तपश्शौचं च पञ्चमम् ॥ पञ्चलक्षणसम्पन्नः ईदृशो यो भवेद् द्विजः। तमहं ब्राह्मणं ब्रूयां शेषाः शूद्राः युधिष्ठर ! ॥ शौचं=पावित्र्यं, अनृतद्वेषविषयलोलुपतादिदोषमालिन्यनिवारकत्वात् सत्यादीनामस्ति पवित्रकरत्वम्। 'न कुलेन न जात्या वा क्रियाभिर्ब्राह्मणो भवेत्। चण्डालोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिर !॥' अनेन सनातनार्यधर्मस्य परमौदार्यं पक्षपातराहित्यञ्च सूच्यते। 'सर्वे हि योनिजाः मर्त्याः (न तु मुखादिजाः) सर्वे मूत्रपुरीषिणः। एकेन्द्रियेन्द्रियार्थाश्च तस्माच्छीलगुणो द्विजः ॥' एकः=समानः। अर्थात् सर्वेषां मानवानां समानानि चक्षुरादीनीन्द्रियाणि सन्ति, तैरनुभूयमानाः रूपादयो विषयाः अपि समाना एव सन्ति, न विषमाणीन्द्रियाणि न च विलक्षणाः विषमाः विषयाश्च। तस्मात् शीलेन-सदाचारेण शमादिगुणैश्च युक्त एव द्विजः= ब्राह्मणो ज्ञेयः। 'पञ्चेन्द्रियार्णवं घोरं यदि शूद्रोऽपि तीर्णवान्।

तस्मै दानं प्रदातव्यमप्रमेयं युधिष्ठिर !।। अप्रमेयं=अपरिमितं, अनेन तपःपरायणः संयम्येव दानयोग्यः, न तु विषयासक्तः । अतः 'न जाति र्दृश्यते राजन् ! गुणाः कल्याणकारकाः । तस्माच्छूद्रप्रसूतोऽपि ब्राह्मणो गुणवान्नरः ।।' (अ० २६६।३२ इत्यारभ्य ज्ञेयाः) एतै र्वचनैः सुस्पष्टमवगम्यते-यत्प्रशस्तस्य श्रद्धेयस्य ब्राह्मणवर्णत्वस्य ब्रह्मर्षित्वस्य च प्रयोजका एते प्राक्प्रतिपादिता गुणा एव, वेदाध्ययनपरोपकारादीनि शुभानि कर्माण्येव च सन्ति । एतादृशप्रशस्तगुणगणोपेतं ब्राह्मण्यं को न मतिमान् श्रद्दध्यात्?। के न सहृदयाः तत्रानुरागं बद्ध्वा प्रणता भवेयुः? अत एव प्राप्ताप्राप्तविवेकन्यायेन यत्र कुत्रापि प्राप्तानां गुणानामेव पूज्यता वेदितव्याः। तथा चोक्तं शिष्टैः-'गुणाः पूजास्थानं न च गुणिषु लिङ्गं, न च वयः।' इति । अत एव-'अत्रैलूषैतरेयाद्या दासीपुत्रा अनार्यकाः। बभूवु ऋषयो मन्त्र-द्रष्टारो गुणकर्मभिः ।।' इति ।

## संकुचित-घृणित-स्वार्थान्ध-मनोदशा

यत्तु केरलद्राविडादिदक्षिणप्रदेशवास्तव्याः केचनाहंमन्याः ब्राह्मणाः तत्रत्यान् ब्राह्मणेतरान् गीताविष्णुसहस्रनामभागवतादिग्रन्थपाठकर्तॄन् निरीक्ष्य तान् प्रति वदन्ति भो! युष्माभिः कथमपि गीतापाठादिकं नैव कर्तव्यम् ( तत्प्रदेशे वर्तमानानां ब्राह्मणेतराणां सर्वेषां शूद्रत्वात् ) केवलं ब्राह्मणमुखात् तच्छ्रवणं कर्तव्यम् । तत्पाठकरणेन भवतां महान् अपराधो जायते, महत्पापञ्च प्रादुर्भवति। अतो गीतापाठादिजन्येन पापेन भवन्तो नरकं गमिष्यन्तीति । एवं पापनरकादिभयं प्रदर्श्य तान् गीतापाठादितो निवारयन्ति । कर्णाटकस्य महीशूरादिप्रदेशे सर्वत्र गीतादिप्रचारं कुर्वता परमहंसस्वामिना श्रीशंकरानन्देनेदृशो

वृत्तान्तोऽस्मभ्यमभिहितः । अस्मत्सभायां सर्वान् परमश्रद्धया गीतापारायणादिकं कुर्वाणान् हिन्दून् समुपलभ्य तत्रत्याः केचन ईर्ष्याविशवशवर्तिनो ब्राह्मणा अनर्गलप्रलापमुपद्रवञ्च कुर्वन्तीति ।

एवं दक्षिणप्रदेशवास्तव्यानां केषाञ्चिद् ब्राह्मणानां सर्वैरपि संकुचिता घृणिता स्वार्थान्धा च मनोदशा स्पष्टमवगन्तुं शक्यते । परन्तु ते नेत्रे समुद्घाट्य न मनागपि विचारयन्ति, वस्तुतः पुराणभारतादीनामुच्चासनमधिरुह्य प्रवक्तारः सूतादयः शूद्रा एव बभूवुः ।

यदाहुः—'पुराणादिप्रवक्तृत्वं (प्रवचनकर्तृत्वं) शूद्रस्यैवादितः श्रुतम् । ऋषीन् ( शौनकादीन् ) अध्यापयत् सूतः, पुराणानि विलोमजः ।। प्रख्यातो व्यासशिष्योऽभूत्, सूतो वै रोमहर्षणः । पुराणसंहितां तस्मै ददौ व्यासो महामुनिः ।' ( मा० आ० भाष्ये ) 'यत्तु शूद्राधिकारोऽस्ति पुराणश्रवणे, न तु । तत्पाठेऽपीति केषाञ्चिन्मतं तच्चाज्ञकल्पितम् ।। पुराणाध्यापनं तुच्छं तत्कथावाचनं च किम् ? । ब्रह्मविद्याप्रवक्तृत्वं चापि शूद्रस्य सुश्रुतम् ।। 'नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ।' ( म० भा० वनपर्व २१० १५ ) इत्युक्त्वा कौशिकं व्याधः ( महाशूद्रः ) तं वेदान्तमवेदयत् ।।' इति । 'श्रद्दधानः शुभां विद्यामाददीताऽवरादपि । अन्त्यादपि परं धर्मं' इत्याह भगवान्मनुः -। स्वयं श्रीशङ्कराचार्य्यश्चान्त्योक्तिप्रबोधितः । भेदबुद्धिं मनुष्येषु त्यक्त्वाऽमन्यत तं गुरुम् ।।' (मा० आ० भा०)इति ।

## शूद्राधिकरण-समालोचना

मानवार्षभाष्ये हि वेदान्तदर्शन—ब्रह्मसूत्रमीमांसायां प्रसिद्धस्य शूद्राधिकरणस्येदृशी समालोचना कृता । यथाहि—'क्वचि-

द्ग्रन्थेषु याऽनूक्ता, शूद्रश्रोत्रे तु निर्दया। तप्तत्रपु–जतुक्षेप्त्री, स्मृतिः सा नार्षवाङ्मयी।। बभूवुः ऋषयः पूर्वे, सर्वभूतहिते रताः। महाकारुणिकास्तेषां, शूद्रे न स्यान्नृशंसता।। न, वेदोच्चारणे जिह्वाच्छेदं शूद्रस्य धारणे। देहभेदं विदध्याद्वा, वागार्षी करुणामयी।। साक्षाद्वेदविरुद्धत्वात्, स्मृतिष्वेतादृशं वचः। प्रक्षिप्तं स्यान्नृशंसैस्तु स्वार्थान्धैर्जनशत्रुभिः।। 'स्त्रीशूद्रौ न त्वधीयाताम्, एषा कैश्चित्प्रकल्पिता। श्रुतिः क्वापि हि वेदेषु, तत्सत्त्वानुपलम्भतः।। प्रत्युत श्रुतिकर्तृत्वं, शूद्रस्य सर्वसम्मतम्। स्त्रीदृष्टा वेदमन्त्राश्च जयन्त्यद्यापि सूक्तशः।।' इति। आर्षवाङ्मयी=ऋषिप्रोक्ता शब्दसमुदायरूपेत्यर्थः। नृशंसता=क्रूरता–परद्रोहकारिता। नृशंसैः=क्रूरैः–निर्दयैः। इति। एवं विदेशीयाः अत्रत्यपण्डितै र्म्लेच्छत्वेनाभिमताः मोक्षमूलरप्रभृतयो भूयांसोऽपि विद्वांसः–ऋग्वेदादिसंहितानामध्ययनतदर्थविचारसमालोचनप्रकाशनादिकं समादरेण चक्रुः, तथापि तेषां शूद्राधिकरणन्यायेन किमप्यनिष्टमत्रत्यैः पण्डितमानिभि र्न कृतमित्याश्चर्यमिति।

## भगवतः परशुरामस्य महाकारुणिकत्वम्

अत एव यदा राज्यैश्वर्यमदोन्मत्तक्षत्रियजातिविध्वंसशीलस्य महाक्रूरस्य भगवतः परशुरामस्यापि कैवर्तादिमहाशूद्रेषु प्रभूतं सफलं कारुण्यं दृष्टम्, तदाऽन्येषां व्यासवसिष्ठादिमहर्षीणां करुणाशालित्वमवर्णसिद्धमेव संपद्यते। अत एव दीनहीनान् कैवर्तादिमहाशूद्रानभिवीक्ष्य तेषु सर्वोत्तमत्वस्य विद्यादिसद्गुणशालित्वस्य च विधानाय स्वनिष्ठप्रभूतकरुणायाः प्रत्यक्षसद्यःप्रकटितफलस्य संस्थापनाय च सः परशुरामः तान् इत्थमुवाच–'भवत्सु ब्राह्मणत्वं हि सद्यः

संस्थापयाम्यहम् । ब्राह्मणाः नूतनाः कार्याः, गुणकर्म परिवर्त्य च ।। मयि प्रभूतकारुण्यं क्रूरता न च विद्यते । तस्य प्रकटनार्थाय सर्वस्मिन जगतीतले ।। अधमान् उत्तमान् कृत्वा कारुण्यं ख्यापयाम्यहम् । ततो नूतनविप्रेभ्यो ददौ गोत्राणि नामतः ।। वेदान् साङ्गान् ससूत्रांश्च, तच्छाखाः प्रवरैः सह । शुभाचारान् शुभादेशान्, आर्यभावान् यशस्करान् ।। कृत्वैषां चित्तशुद्धिं तु, यस्मात्परशुरामतः । चित्तशुद्धिः कृता तेषां तस्मात्ते चित्तपावनाः ।। महाश्रेष्ठा हि विद्वांसः, प्रभूतैश्वर्यशालिनः । भुञ्जते ते मुदैर्तहि भार्गवकरुणाफलम् ।। पश्चात्तेन कृपालुना तेभ्यो दत्तो वरो ह्ययम् । 'यदा कदा वा युष्माकं विपत्तिर्जायते भवि । तदाऽऽह्वयन्त मां सर्वे समवेताः सुखाप्तये।। आगत्याहं तदा विप्राः ! वः कार्यं साधये क्षणात् । एवं हि चाशिषस्तेषां ददौ तु भार्गवो मुनिः ।।' (ब्राह्मणोत्पत्तिमार्तण्डे-वेङ्कटेश्वरप्रेसमुद्रिते ३१५ पृष्ठे) इति । 'एवं केरलदेशीय-कैवर्ते करुणा कृता । प्राक् च निरूपिताऽस्माभिः, भार्गवेणेति बुध्यताम् ।।'

अत एव महाराष्ट्रादौ चित्तपावनविप्रैर्भगवतः परशुरामस्य भार्गवस्य महामुने–र्महाकारुणिकत्वश्रद्धेयत्वपूज्यत्वादिद्योतनायानेकानि मन्दिराणि श्रद्धया विनिर्मितानि सन्ति, इति श्रूयते । त्र्यम्बकतीर्थे तु मया रम्यं परशुराममन्दिरं प्रत्यक्षमवलोकितम् । तत्र गत्वा तत्सौम्यमूर्तेर्दर्शनं कृत्वा किमपि प्रवचनमपि विहितमिति ।

### स्वनिष्ठोत्तमत्वमिथ्याभिमानः परनिष्ठनीचत्वशूद्रत्वघृणा-भावना च प्रभूतानर्थकारिणी; प्रसिद्धजगन्नाथ-मन्दिरस्थितगोवर्धनमठविध्वंसेतिहासश्च ।

तदानींतनः कश्चनारण्यनामा जगन्नाथपुरीस्थितगोवर्धन-मठाध्यक्षः शंकराचार्य आसीत् । यथा भगवतो द्वारकाधीश-स्यैव मंदिरे भगवत्पादादिमशंकराचार्यस्थापितः शारदामठः संप्रत्यपि वर्तते, तथा तदा गोवर्धनमठोऽपि भगवतो जगन्नाथ-स्यैव मन्दिरेऽवर्तत । तत्समये कश्चन श्रद्धाभक्तिसम्पन्नो नागपुरनरेशो 'भोसले'—महाराजः स्वकल्याणकामनया तं जगद्गुरुपदवीविभूषितं योगिनं तेजस्विनं शंकराचार्यं मन्त्र-दीक्षालाभाय प्रार्थयामास । तेन साभिमानं विपुलैश्वर्यसम्पन्नः स नरेशः पृष्टः, 'का जातिर्विद्यते भवदीयेति ।' नम्रभावेन नागपुरप्रदेशाधिपतिना 'भोसले' इत्युपसंज्ञावान् मराठोऽहमस्मी-त्युक्तम् । तच्छ्रुत्वा स्वनिष्ठोत्तमत्वविषयकमिथ्याभिमानवशं-वदः परनिष्ठनीचत्वशूद्रत्वघृणाभावनाभरितहृदयः सः शंकरा-चार्योऽवदत् । 'राजानोऽपि मराठाः न क्षत्रियाः सन्ति, किन्तु शूद्राः एव सन्ति, अतस्त्वमपि शूद्रोऽसि, अतस्तव मत्तो मन्त्र-दीक्षाग्रहणे नास्त्यधिकारः, अतो नाहं तुभ्यं शूद्राय मन्त्रदीक्षां दातुं समर्थोऽस्मि, इति । तस्य स्वजात्यपमानपूर्णमत्युद्वेगकरं निष्ठुरं वचः श्रुत्वा स महीपतिर्महाराजोऽतीव चुक्षुभे प्रचु-कोप च ।

तथापि क्षत्रियप्रकृतिना सिंहसमदर्शनेन तेन महाराजेन श्रद्धेयकाषायवस्त्रवेष्टितं सम्मान्यविरक्तचतुर्थाश्रमरूपेणाचार्य-पीठावस्थितं तं दण्डिनं मत्वा दण्डप्रहारादिना न तस्य किमप्य-निष्टमाचरितम् । पूर्वोक्तदुर्वचःप्रहारस्य, तज्जन्यकोपस्य च

मौनभावेन सहनं कृत्वा खिन्नवदनः सन्, ततो निष्क्रम्य रामानुजसंप्रदायस्य मठालयं जगाम । तत्र गत्वा तन्मठालयाध्यक्षं महान्तमाचार्यपदवीविभूषितं साधुमहाराजं प्रति स नरेशो मन्त्रदीक्षालाभाय प्रार्थनां विधाय पूर्वोक्तस्वजातिपरिचयमदात् । तेन प्रसन्नवदनेन समुदारहृदयेन च स भूपतिर्महाराज इत्थमभिहितः । अहं भवन्तं विशुद्धमिक्ष्वाकुवंशप्रसूतं बलपराक्रमशौर्यधैर्यशालिनं क्षत्रियमेव मन्ये । भवद्वंशे लब्धजन्मानं छत्रपति श्रीशिवाजीतिशुभनाम्ना प्रसिद्धं हिन्दुजातिधर्मराष्ट्रसमुद्धारकं दुष्टम्लेच्छसेनाजेतारं महाशूरवीरं क्षत्रियत्वेन यो न मनुते, स मूढ एवाऽतीत्यहं विजाने । सः शंकराचार्यस्तु कथं जगद्गुरुर्भवितुमर्हति? यो जगति वर्तमानानां सर्वेषां मानवानां कल्याणाय मन्त्रोपदेशमपि प्रदातुं न प्रभवतीति अहमेव वस्तुतो जगतां गुरुरस्मि, यः कोऽपि भवतु नाम, सजातीयो वा विजातीयो वा विदेशीयो वा स्वदेशीयो वा उत्तमो वाऽधमो वा, तस्य सर्वस्य समुद्धाराय कल्याणाय च वैष्णवमन्त्रोपदेशो मयाऽतिप्रेम्णा विधीयते । अस्माभिर्दुन्दुभिनादेन पौनःपुन्येन समुद्घोष्यते—मत्तो वैष्णवीं मन्त्रदीक्षां समवाप्य सर्वे भवन्तु वैष्णवाः, जगतीतले कोऽप्यवैष्णवो मा तिष्ठत्विति ।

अतोऽहं भवन्तं भूपालं महाराजं क्षत्रियमेव मन्यमानो भवतेऽतीवप्रेम्णा स्वकीयश्रीवैष्णवसंप्रदायस्य समुदारां मन्त्रदीक्षामेव दातुं सर्वथा समर्थोऽस्मीति, अतो भवतो विनम्रप्रार्थना मया सफलीकर्तुं शक्यते, इत्येवं तस्य महतः समुदारभावमण्डितं प्रशस्तं वचः श्रुत्वा स महाराजोऽतीव प्रससाद । पश्चात् तेन नागपुरनरेशेन ततो वैष्णवाचार्यात् विधिवत् मन्त्रदीक्षा गृहीता । तस्मै मन्त्रोपदेष्ट्रे गुरवे दक्षिणारूपेण दशलक्षतो-

ऽप्यधिकसुवर्णरजतरूप्यकाणि श्रद्धया समर्पितानि, पुनस्तेन श्रद्धालुना नरेशेन-भगवन् ! कृपासिन्धो ! गुरो ! अन्यां कां भवतः सेवां कर्तुं शक्नोमि, यदि काचन मद्योग्या सेवा स्यात्तदा सा मह्यं स्वसेवकाय निःशङ्कं निवेदनीयेति पुनः पुनस्तेन प्रार्थना विहिता। तत्प्रार्थनां श्रुत्वाऽतीवप्रसन्नः स वैष्णवाचार्यः स्वशिष्यं महाराजं प्रतीत्थं जगाद। येन भवतो महाराजस्य घोरमपमानं विहितम्, यश्च किल सर्वदा सर्वत्र मिथ्याभिमानरूपसुरापानेन मदोन्मत्तो वर्तते, तस्य मिथ्या-जगद्गुरुपदवीधारकस्य भवत्परिचितस्यास्मद्विरोधिनः पूर्वोक्त-शंकराचार्यस्यास्मदिष्टदेवश्रीजगन्नाथविष्णुमन्दिर एव मठालयो विद्यते, तस्य यया कयाऽपि रीत्या विध्वंसः कर्तव्यः, ततो-ऽस्मादस्य निष्कासनं यथा स्यात्तथा भवता समर्थेन बलवता विधातव्यमितीदृशीं सेवां कर्तुं भवन्तं स्वशिष्यमहं विनिवेद-यामि।

इत्येवं तस्य वैष्णवाचार्यस्य गुरोर्वचः श्रुत्वा प्रसन्नः स महाराजः कामपि सहायशक्ति समवाप्य जगन्नाथपुरीराजस्य खुर्दानरेशस्य तन्मन्दिरपुजारिपुरोहितादेश्च तत्कार्यकरणे द्रव्यादिप्रदानेन स्वानुकूल्यञ्च संपाद्य तं जगन्नाथदेवालय-स्थितं गोवर्धनमठं विध्वस्तमकरोत्। अन्यत्र गतः सः शंकरा-चार्यः स्वमठविध्वंसं स्वादिमगुरो र्भगवत्पादस्य शंकराचार्यस्य तन्मठस्थितार्चनीयस्याद्वैतपीठस्यापि च विध्वंसं मठार्च्यदेव-मूर्तीनाञ्च समुद्रे निक्षेप च श्रुत्वाऽतीवसंक्षुब्धहृदयः सन् सद्यो जगन्नाथपुरीमाजगाम। तत्रागत्य तन्मठविध्वंसलीलाञ्च स्वचक्षुर्भ्यां दृष्ट्वा स्वशरीरं परित्यक्तुमिच्छता तेन स्वमठविध्वंसप्रयोजकाय नागपुरनरेशाय तद्राज्य-

विध्वंसलक्षणं शापञ्च दत्वा जगन्नाथमन्दिरस्य सिंहद्वार्य-वानशनव्रतेन योगसमाधिना स्वशरीरं परितत्याज ।

इत्येवं तेन स्वमिथ्याभिमानस्य परनिष्ठनीचत्वशूद्रत्व-घृणाभावनायाश्च प्रभूतानर्थकरं कटुफलं सद्योऽनुभूतम् कीदृशोऽयं परस्परयोः समुच्छेदको जातिविद्वेषः, शिष्टविगर्हितः संप्रदायविद्वेषश्च । ईदृशः प्रामाणिक इतिहासो बंगदेशीयेन विदुषा परमहंसेन श्रीदुर्गाचैतन्यभारतीस्वामिना 'संन्यास एव संन्यासी' इति नाम्ना प्रसिद्धे हिन्दीग्रन्थे बंगलाभाषाग्रन्थे च प्रकाशितो मया च यथावत् पठित एवात्र विलिख्यते । ततो बहुकालादनन्तरं केनचिदन्येनाभिनवशंकराचार्य्येण समुद्रतटे नूतनो गोवर्धनमठो निर्मितः, तत्रादिमभगवत्पादशंकराचार्य-स्याद्वैतपीठः तन्मूर्तिः श्रीवेणुवादकगोपालविग्रहश्च तेन संस्थापितोऽद्याप्यवलोक्यमानो भवति ।

अनेन वृत्तान्तेनेदमवगम्यते-यद्यपि सर्वेषु देशेषु मनुष्यसमाजे च उत्तमाधमभेदभावस्तु सर्वत्र विद्यते एव । परन्तु भारते प्ररूढतया वर्तमान उत्तमाधममध्यमजातिभेदोऽन्यत्र दुर्लभः प्रतीयते । यतोऽन्यदेशेषु तद्देशीयः समुदारो धर्मः समस्तांत्तमा-धमभेदान् गौणीकृत्य तत्र मुख्यमैक्यं प्रशस्तं स्थापयति, परन्तु भारते तु जात्युपजातिभेदभित्तिरेव धर्माधारमवलम्ब्यैवावस्थिता भवति । अर्थात् धर्मेऽपि भूयान् भेदः, तत्तत्समाजेऽपि च भेदः सर्वत्र यत्र तत्र भेद एवावलोक्यमानो विजयते । अभेदभावस्तु केवलाद्वैतवेदान्तिनां वाच्येव वर्तते, नान्यत्रेति ।

## जातिभेदकर्मभेदप्रयुक्तं राष्ट्रस्य भारतस्य महदानर्थक्यम्

कश्चनैवमधिक्षिपति—यस्मिन् देशे जातिभेदाः तत्तत्कर्म-भेदाश्च नैव सन्ति, तस्य देशस्योपरि शत्रूणामाक्रमणे सति

सर्वेऽपि देशवास्तव्याः समानरूपेण लब्धयुद्धादिशिक्षाः, अत एव शूराः वीराः संमिलिताश्च भूत्वा शत्रुभिः साकं स्वराष्ट्रस्वातन्त्र्यरक्षणहेतवे युद्धं कुर्वन्ति, संघशक्तिप्रभावेण च ते शत्रून् विनाशयन्तोऽभ्यर्हणीयं विजयं लभन्ते। परन्तु यस्मिन् जातिभेदकर्मभेदाभ्युपगमकर्तरि देशेऽमुकस्य श्रेणिविशेषस्य क्षत्रियजातिविशिष्टस्यैव शतेषु विंशतिसंख्यातोऽपि न्यूनस्य युद्धादिशिक्षणेऽधिकारो वर्तते, नान्येषां प्रभूतसंख्याकानां ब्राह्मणत्वादिजातिविशिष्टानाम्। तस्मिन् देशे कदाचित् बाह्यानां विजातीयानां शत्रूणां प्रबलाक्रमणेन सा न्यूनसंख्याका क्षत्रियजातिः विपन्ना वा विनष्टा वा भवेत् चेत्, तदाऽन्ये ब्राह्मणादयो बलशौर्ययुद्धशिक्षणादिरहिततया निःसहायाः अनाथाः वराकाः किंकर्तव्यविमूढाः तत्पराजयेन पराजिताश्च भूत्वा विधर्मणां म्लेच्छशत्रूणामजाविसारमेयादिसंघवत्–अधीना भवन्त्येव। अल्पसंख्यकक्षत्रियपराजयेन समग्रस्यापि राष्ट्रस्य पराजयो मन्यत एव। निखिलं राष्ट्रं परतन्त्रं सम्पद्यत एव। अत एवास्मादेव जातिभेदकर्मभेदाभ्युपगमरूपकारणात् समुद्भूतं प्रभूतानिष्टजनकं प्रशस्तराष्ट्रजातिधर्मगौरवविघातकं पारतन्त्र्यं सहस्रवर्षपर्यन्तं भारतीयैर्दीनैर्हीनैश्चानुभूतम्। यद्यपि-देशस्वातन्त्र्यरक्षणायाक्षत्रिया अपि सन्नद्धा अभवन्, शत्रुभिः साकं युद्धमकार्षुः, परन्तु ते सामान्यनियमस्यापवादभूता एव मन्तव्याः। अत एव ते महाशूरवीराः कृतशत्रुपराजयाः हिन्दुधर्मरक्षकाः श्रीशिवाजीप्रभृतयः अन्यैः शुद्धक्षत्रियवंश्यैः राजस्थानादिनिवासिभि र्विभिन्नजातित्वेन प्रद्वेष्याः अभूवन्निति मराठाराजस्थानक्षत्रियेतिहासविदो विज्ञापयन्त्येव।

## अत्रेदं शास्त्रीयं तत्समाधानम्

ऐतरेयब्राह्मणे यथा—यज्ञसमये त्रैवर्णिकानां सर्वेषां ब्राह्मणत्वमेवाम्नातम्, अर्थतस्तद्धर्मा अपि तैरङ्गीकरणीयत्वेन कथिताः सन्ति। तद्यथा—'ब्रह्म वा एष प्रपद्यते, यो यज्ञं प्रपद्यते, ब्रह्म वै यज्ञः, यज्ञादु ह वा एष पुन र्जायते। यो दीक्षते, तं ब्रह्म प्रपन्नं क्षत्रं न परिजिनाति।' 'स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति, यत् कृष्णाजिनमध्यूहति, यद्दीक्षितव्रतं चरति, यदेनं ब्राह्मणाः अभिसंगच्छन्ते।' अग्निं देवतामुपैमि, गायत्रीं छन्दः, त्रिवृतं स्तोमं, सोमं राजानं (उपैमि) ब्रह्म प्रपद्ये, ब्राह्मणो भवामीति।' (ऐ० ब्रा० अ० ३४। खं० ४-५-६) इति। अयमर्थः—एषः=क्षत्रियादिः, ब्रह्म=ब्राह्मणवर्णं, तद्धर्मांश्च शमदमज्ञानादीन् प्रपद्यते=प्राप्नोति, यः=क्षत्रियादिः, यज्ञं=श्रेष्ठतमं कर्म, प्रपद्यते=स्वीकरोति। दीक्षते=सत्यब्रह्मचर्याहिंसादिव्रतदीक्षामभ्युपगच्छति, तं ब्रह्म=ब्राह्मणवर्णत्वधर्मादिकं प्रपन्नं=प्राप्तं, न परिजिनाति=न परित्यजति। स ह=सः खलु क्षत्रियादिः, दीक्षमाण एव=व्रतदीक्षां स्वीकुर्वन्नेव, ब्राह्मणतां=ब्राह्मणवर्णत्वादिकं, अभ्युपैति=प्राप्नोति। कृष्णाजिन=संस्कृतं कृष्णमृगचर्म, दीक्षाज्ञापकं, अध्यूहति=आच्छादयति, यद दीक्षितानां व्रतं=सत्यब्रह्मचर्यवाङ्नियमनगायत्रीजपध्यानादिकं, चरति=अनुतिष्ठति। यत्=यस्मात्, एनं=क्षत्रियादिकं लब्धदीक्षं ब्राह्मणाः दीक्षिताः अभितः संगच्छन्ते=संगताः एकस्यामेव पङ्क्तौ संमिलिताः भवन्तीति यदस्ति, तेन सर्वेण दोषमार्जनगुणाधानलक्षणेन संस्कारेण क्षत्रियादिः ब्राह्मण्यं प्राप्नोति। प्राक् क्षत्रियादिरहं संप्रति लब्धयज्ञदीक्षाप्रभावेण अग्नि ब्राह्मणवर्णेष्टदेवतां उपैमि=प्राप्नोमि, तथा गायत्रीं त्रिवृतं स्तोमं

सोमं× राजानं च, ब्रह्म=ब्राह्मणवर्णादिकं, प्रपद्ये=प्राप्नोमि, अतस्तेषामग्न्यादीनामनुग्रहणात् अहं ब्राह्मणो भवामि (सायणभाष्यम्) एवं शतपथब्राह्मणेऽपि–'अथाऽत्राद्धा जायते, यो ब्राह्मणो यो यज्ञाज्जायते, तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्, ब्रह्मणो हि जायते, यो यज्ञाज्जायते। ( शतपथ ब्रा० ३।२।१।४० )इति। यः=क्षत्रियादिः, यज्ञात=यज्ञदीक्षातः जायते=संस्कृतः सन् आविर्भवति, ब्रह्मणः=ब्राह्मणवर्णत्वादितो जायते, तेन संपन्नो भवतीति यावत्।

तथा–राष्ट्रस्वातन्त्र्यरक्षणसमये युद्धादिसमयेऽपि च सर्वेऽपि ब्राह्मणादयः क्षत्रिया एवार्थतस्तद्धर्मबलशौर्यधैर्यनिर्भयत्वयुद्धशिक्षणादिसमन्विताः भवन्तीति समाम्नातम्। तद्यथा–'क्षत्रं वा एष प्रपद्यते, यो राष्ट्रं प्रपद्यते, क्षत्रं हि राष्ट्रं, तं क्षत्रं प्रपन्नं ब्रह्म न परिजिनाति।' ( ऐ० ब्रा० अ० ३४।७ )इति। अयमर्थः–यः=ब्राह्मणादिः, राष्ट्रं=राष्ट्रस्वातन्त्र्यादिरक्षणाय, प्रपद्यते=प्राप्नोति, सन्नद्धो भवति, वा=वै, निश्चयेन, एषः ब्राह्मणादिः, क्षत्रं=क्षत्रियवर्णत्वतद्धर्मयुद्धशिक्षणबलशौर्यादिकं ब्रह्म=ब्राह्मणादिवर्णः, तं प्रपन्नं=स्वीकृतं, क्षत्रं=क्षत्रियत्वादिकं न परिजिनाति=न परित्यजति। तथा च यथा यज्ञसमये सर्वे क्षत्रियादयो ब्राह्मणा भवन्ति, तथैव युद्धसमये सर्वेऽपि ब्राह्मणादयः क्षत्रिया एव भवन्तीति बोध्यम्। अनेन स्वस्वरुचियोग्यतानुरोधेन वर्णपरिवर्तनमवगम्यते। सति चैवं जातिभेदकर्मभेदप्रयुक्तमानर्थक्यं नावतिष्ठत इति सर्वं सुस्थम्।

×'सोमो वै अस्माकं ब्राह्मणानां राजा' (शुक्ल० यजुर्वेद० १०।१८) इत्यादौ समाम्नानात्।

अत एव संप्रत्यपि राष्ट्ररक्षणशत्रुपराजयसमये सर्वेऽपि आर्या भारतीयाः क्षात्रभावोपेताः संहता व्यूहसम्बद्धाश्च भवन्तोऽवश्यमेव विजयं लभन्ते। सति चैवं संग्रामस्थल एव केवलं क्षात्रभावशौर्यादिकमपेक्ष्यत इति न मन्तव्यम्, अपि तु योद्धॄणां वीराणां निखिलस्य समाजस्य च रक्षणाय पोषणाय च कृषिश्रमादिस्थलेष्वपि उल्लासोत्साहधैर्यप्रयत्नादिलक्षणः क्षात्रभावोऽस्त्यपेक्षित इति ज्ञेयम्।

## बहुपत्नीवादः

कश्चनैवमधिक्षिपति–पूर्वस्मिन् समये ये महान्त ऐश्वर्यशालिनो विशिष्टसत्तावन्तो राजानो महाराजाः सम्राजश्च, विस्तृतभूस्वामिनः सामन्ताः धनाढ्याः श्रेष्ठिनश्चासन्, ते तु भूयसीः पत्नीः संभोग्यरूपेण परिजग्रहुः, ताभ्यश्च प्रभूताः प्रजाः जनयामासुः।

परन्तु ये धर्माचार्याः श्रद्धेयाः प्रभुभक्तिपरायणाः ब्रह्मवादिनो महर्षिपदवाच्याश्च बभूवुः, तेऽपि नैकां पत्नीमपि तु अनेकाः पत्नीः भुञ्जानाः आसन्। तेषु बहुषु महर्षिषु सप्त ऋषयः प्रधानरूपेण स्मृतिपुराणादिषु प्रसिद्धाः मन्यन्तेऽस्माभिः। यथाहि–'मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठ इति सप्तैते मानसा निर्मिता हि ये॥ एते वेदविदो मुख्याः वेदाचार्य्याश्च कल्पिताः॥' ( महा–शान्ति० ३४०।६९-७० ) इति।

## मरीचिः

अस्य महर्षेः अनेकाः रमण्य पत्न्य आसन्, यासु प्रधाने द्वे भार्ये आस्ताम्। एका दक्षप्रजापतेः राज्ञः पुत्री संभूतिः, द्वितीया धर्मनाम्नो ब्राह्मणस्य कन्या धर्मव्रता च। ताभ्यः प्रभूतसन्तति-

विस्तारोऽजायत। प्रसिद्धः कश्यपो महर्षिः मरीचिपुत्र एवास्ति। वायुपुराण-स्कन्दपुराण-अग्निपुराण-पद्मपुराण मार्कण्डेयपुराण-महाभारत-प्रभृतिषु तस्य विस्तृता कथा वर्तते।

## अङ्गिराः

अस्य महर्षेरपि अनेका उपभोग्याः पत्न्य आसन्। यासु प्रधानतया पञ्च भार्या बभूवुः। प्रथमा मरीचिकन्या सुरूपा, द्वितीया कर्दममहर्षिपुत्री स्वराट्, तृतीया च मनुमहाराजस्य पुत्री पथ्या, चतुर्थी अत्रिमहर्षिकन्या आत्रेयी, पञ्चमी च शुभा। प्रथमया वृहस्पतेः पुत्रस्य, द्वितीयया गौतमवामदेवादिपञ्च-पुत्राणां, तृतीयया विष्णुप्रभृतिपुत्रत्रयस्य, चतुर्थ्या आङ्गिरसादि पुत्राणां प्रादुर्भावो बभूव। वायुपुराणे (६५) पञ्चषष्टितमेऽध्याये, ब्रह्मपुराणे महाभारते चास्य कथा विद्यते।

## पुलस्त्यः

अस्यापि महर्षेः सन्ध्या-प्रतीची-प्रीति-हविर्भू-प्रभृतिप्रभूत-पत्न्यः आसन्। ताभ्यो दत्तोलि-निदाघागस्त्यविश्रवः—प्रमुखाः अनेके पुत्रा अजायन्त। विश्रवसः सकाशात् कुबेररावणकुंभ-कर्णविभीषणप्रभृतयः पुत्राः समुदपद्यन्त। एतस्य कथा विष्णु-पुराण—ब्रह्मवैवर्तपुराण-कूर्मपुराण-श्रीमद्भागवत-वायुपुराणमहा-भारतोद्योगपर्वप्रभृतिग्रन्थेषु वर्तते।

## पुलहः क्रतुश्च

पुलहस्य महर्षेरपि अनेकाः रमण्यः कलत्राण्यासन्। तासु दक्षप्रजापतिकन्या क्षमा, कर्दमपुत्री गतिश्च मुख्ये आस्ताम्। क्रतुमहर्षेरपि बहुभार्यासु कर्दमकन्या क्रिया, दक्षपुत्री सन्नतिश्च द्वे प्रधाने आस्ताम्। एतयोश्च भागवते चतुर्थस्कन्धे विष्णुपुराणे च प्रथमांशे च कथा वर्तते।

## वसिष्ठः

वसिष्ठस्य महर्षेः अरुन्धतीनामिका पत्नी आसीदिति सर्वत्र प्रसिद्धम् । परन्तु तस्याक्षमालासंज्ञिका द्वितीया परिणीता पत्न्यप्यासीदिति—'अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ।। एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः । उत्कर्षं योषितः प्राप्ताः स्वैःस्वैर्भर्तृगुणैः शुभैः ।।' ( मनु० ९।२३-२४ ) इति मनुस्मृतिवचनप्रामाण्यादवगम्यते । संयुक्ता=परिणयेन वधूरूपेण संगता । अभ्यर्हणीयतां=पूज्यतां गता । एताश्चान्याश्च सत्यवत्यादयो निकृष्टयोनिप्रसूतयः, स्वभर्तृप्रकृष्टगुणैः उत्कृष्टतां प्राप्ताः । अनेनासवर्णविवाहोऽपि प्राक् बाहुल्येन प्रवृत्तोऽभूदिति ज्ञायते ।

इमे च महर्षयः स्वायम्भुवमन्वन्तरसमये वर्तमाना बभूवुः । वर्तमाने वैवस्वतमन्वन्तरे तु 'विश्वामित्र-जमदग्नि-भरद्वाज-गौतमात्रि-वसिष्ठ-कश्यपाः' सन्ति ।

## वैदिककालः

धनैश्वर्यसम्पन्नस्यानेकसुन्दरस्त्रीसेवनं वैदिककालेऽप्यवगम्यते । यथाहि—'परिष्वजन्ते जनयो यथा पतिम् ।' ( ऋ० १०।४४।१ ) इति । जनयः=जायाः सुन्दररमण्यः, बहुवचनात् अनेकाः, पतिमेकवचनात् एकम् । परिष्वजन्ते=समालिङ्गनं कुर्वन्ति । 'समस्मिञ्जायमान आसत ग्नाः ।'( ऋ० १०।९५।७) इति । अयमर्थः—अस्मिन् पुरुरवसि राज्ञि जायमाने सति= अर्थात् धनैश्वर्ययौवनादिगुणैः प्रादुर्भूते संयुक्ते सति, ग्नाः= अप्सरसो देववेश्या अपि, बहुवचनात् बह्वचः सम्‌आसत=संगता अभवन् । तथापि कामकिंकरो पुरुरवाः तृप्तिं न लेभे, इति कामस्यानलत्वं बहुसंतापप्रदतया वैरित्वञ्च सूच्यते । 'ग्नाः' इति

स्त्रीणां नाम, गच्छन्ति हि एनाः मैथुनधर्मेण नरा इति शेषः । अपि च 'ग्ना व्यन्तु देवपत्न्यः' (नि० १२।४६।१) व्यन्तु=पिबन्तु, एतदाज्यमिति शेषः । इत्यत्र निरुक्ते न मानवपत्न्यो ग्नाः, अपि तु गन्धर्वादिदेवानां पत्न्यः सन्तीति स्पष्टं प्रतिपादितम् ।

## केयमुर्वशी, पुरुरवाश्च कीदृशः ?

'ता अञ्जयोऽरुणयो न सस्रुः' (ऋ० १०।९५।६) ताः=प्रसिद्धाः, विदेशीयाः विजातीयाश्चाप्सरसः, कीदृशास्ताः, अञ्जयः=विविधवस्त्राभरणोपेताः, अरुणयः=अरुणवर्णाः, न सस्रुः=पुरुरवसः राज्ञः सकाशात् उर्वशीवत् न जग्मुः, किन्तु अवस्थिता बभूवुः । तथापि राजा पुरुरवाः विविधानेकोपभोग्य-नारीसंयुक्तोऽपि उर्वशीविरहेणातिव्याकुलः सन् इतस्ततो बभ्राम, विविधं कष्टमनुभूतवान् । ताः प्रभूताः सुन्दर्यो युवतयोऽपि तस्य व्याकुलतामपनेतुमसमर्था अभवन् इत्यहो कामस्य वामता । अनेन बह्वीभिः रमणीभिः सजातीयाभि र्विजातीयाभिश्च सह राज्ञः पुरुरवसः कामसंसर्गो जात इत्यप्यवगम्यते ।

उर्वश्यपि विदेशीया विजातीया चास्ति । स्वयमुर्वशी ब्रवीति–'यद्विरूपाऽचरं मर्त्येषु ।' (ऋ० १०।९६।१६ ) यत्=यदा, अहं, विरूपाऽस्मि, देशजाति–आकारवेषभूषादिभेदेन तस्याः विरूपत्वम् । सा च गन्धर्विणी वेश्याऽऽसीत् । अत एव 'वेश्यापुत्रो वसिष्ठः' इति प्रसिद्धम् । मर्त्येषु=मनुष्येषु-मनुपुत्रेषु-आर्येषु, अचरं=मनुष्याणां सविधे गमनमकार्षमित्यर्थः । 'अमानुषीषु मानुषो निषेवे ।' ( ऋ० १०।९५।८ ) 'यदासु मर्तो अमृतासु निस्पृक् ।' (ऋ० १०।९५।९) इति । अमानुषीषु=गन्धर्वादि-देवभूतासु-अप्सरःसु मानुषः सन्=मनुपुत्रः आर्यः सन् पुरुरवाः निषेवे=प्रबलासक्त्या ताः सेवितवान् । यत्=यदा आसु-अमृतासु-

अप्सरःसु, मर्तः=मनुष्यः पुरुरवाः निस्पृक्=ताः निःशेषेण पस्पर्श ।

वैदिकसमयेऽपि धनादिसम्पन्नाः लोका अतिकामाकुला आसन् । दिवसे मैथुननिषेधमपि न पालयामासुः, संयमस्य विशेषमादरं नाकार्षुः, इत्यनेन वेदवचनेनावगम्यते । 'दिवा नक्तं श्नथिता वैतसेन' (ऋ० १०।९५।४) इति । सा चोर्वशी, राज्ञा पुरुरवसा, दिवा=दिवसेऽपि, यत्र किल सर्वथा मैथुननिषेधः तस्मिन्नपि । नक्तं=रात्रिषु तु किं वक्तव्यम् ?, यतः प्ररमयत्र्यो रात्र्यो भवन्ति । वैतसेन=दण्डसदृशेन पुंव्यञ्जनेन शिश्नेन श्नथिता=ताडिता भवति । 'त्रिः स्म माऽह्नः श्नथयो वैतसेन ।' (ऋ० १०।९५।५) इति । उर्वशी पुरुरवसं राजानं सम्बोध्य तस्यासंयमं प्रभूतमुक्तवती, हे पुरुरवः ! अस्य मन्त्रस्य तृतीय-पादे सम्बोधनं वर्तते । त्वं मा=मां अह्नः=अहन्यपि दिवसेऽपि, रात्रौ तु किं वक्तव्यम् ?। वैतसेन=शिश्नदण्डेन, त्रिः=त्रिवारं 'द्वित्रिचतुर्भ्यः सुच्' श्नथयः=अश्नथयः-अताडयः, न त्वेकवारं, असंयमस्य पराकाष्ठा अनेनावगम्यते ।

## कामप्रशंसा महाभारतसमर्थनश्च

अतएव महाभारते आपद्धर्मपर्वणि—धर्मार्थाभ्यामपि कामस्य प्रशंसायै प्राधान्यमभिहितम् । यथाहि—× 'श्रेयस्तैलं हि पिण्याकाद्, घृतं श्रेय उदश्वितः । श्रेयः पुष्पफलं काष्ठात्, कामो धर्मार्थयो र्वरः ।। नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः। तस्मात् कामो विशिष्यते ।' ( अ० १६७।३४-३५-३६ ) सति चैवं

---

× श्रेयः=श्रेष्ठः, पिण्याकात्=तिलकल्कात् 'खोण' इतिगुर्जर-भाषायाम् । उदश्वितः=अर्धजलेन मथितात् तक्रात् ।

अनेकाभिः सुन्दरीभिः युवतिभिः सह एकस्य पुरुषस्य स्वच्छन्दं रमणमित्थं विहितम्। 'सुचारुवेषाभिरलंकृताभिः, मदोत्कटाभिः प्रियदर्शनाभिः। रमस्व योषाभिरुपेत्य कामं कामो हि राजन्! परमो भवेन्नः ॥' ( १६७-३८ ) अर्थात् त्वमेक एवैतादृशीभिः नारीभिः कामं=यथेच्छं रमस्व=रमणं विधेहीत्यर्थः। श्रेष्ठस्य कामस्य परितृप्तये इति शेषः। हे राजन्! नः=अस्माकं मते कामः परमः=श्रेष्ठः प्रशंसनीयो भवेत्। अनेन संदर्भेण महाभारतेऽपि वेदवचनप्रतिपादितो बहुपत्नीवादः स्पष्टतया समर्थितः।

## वसुदेवादिवृत्तान्तः

अत एव द्वापरयुगे पुराणकालेऽपि एकस्यैश्वर्यसंपन्नस्य भूयस्यः पत्न्यः श्रूयन्ते। तद्यथाऽत्रैकमुदाहरणं प्रदर्श्यते। श्रीमद्भागवते नवमे श्रीकृष्णपितुर्वसुदेवस्यानकदुन्दुभीत्यपरनाम्नः— 'पौरवी, रोहिणी, भद्रा, मदिरा, रोचना, इला। देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥' ( भा० ९।२४।४५ ) इति। प्रमुखपदेन नवमस्कन्धे तत्रैव प्रतिपादिताः धृतदेवा, शान्तिदेवा, उपदेवा, श्रीदेवा, देवरक्षिता, सहदेवा च बोध्या। ताभ्यः त्रयोदशपत्नीभ्यः, एकस्मादेव वसुदेवात् षष्टिसंख्यातोऽप्यधिकाः पुत्राः समुत्पन्ना अभूवन्निति तस्मिन्नेव नवमे तत्तन्नामसंख्यानिर्देशेन प्रतिपादिताः सन्ति। 'पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम्।' (भा० १०।१।५६) इत्यनेन प्रतिवर्षं देवक्याः प्रसूतिं बोधयता वचनेनान्यासामपि भार्याणां प्रतिवर्षं प्रसवसंभवेन नारीणामुदरदुर्दशात्वं पुरुषस्यातिकामाकुलत्वं च द्योत्यते।

एवं कलियुगेऽपीदमेकमुदाहरणं सर्वत्रैश्वर्यवतां बहुपत्नीबोधकं प्रदर्श्यते। तद्यथा—'जयचन्द्रस्य भूपस्य, योषितः षोडशो-

ऽभवन्। तासां न तनयो ह्यासीत्, पूर्वकर्मविपाकतः॥' ( भ० पु० ३।३।६ ) इति। एवं भारततत्तत्खण्डशासकानां दुष्टानां मुसलमानराजानान्तु का कथा वक्तव्या भवेत् ?। ते तु यस्य कस्यचित् सुन्दरीं युवतीं सधवां वा विधवां वा पुत्रीं वा वधूं वा बलाद्वा धनाद्वा येन केन प्रकारेण स्वाङ्कशायिनीः अकुर्वन्निति तदितिहासेनावगम्यते। संप्रति हैदराबादनिजामस्य पटियालाराजस्य च प्रभूतोपभोग्यपत्नीपरिग्रहवृत्तान्तः सर्वजनप्रसिद्धोऽस्ति।

## सपत्नीबाधनसूक्तम्

अनेन ऋग्वेदसंहितायाः दशममण्डलस्य-एकशतषट्चत्वारिंशत्तमेन सूक्तेन सपत्न्याः बाधनं प्रतिपाद्यते। अत एतत्सूक्तजपादिना सपत्न्याः विनाशो भवति (सायणभाष्यम्) अनेनावगम्यते वैदिककालेऽनेकस्त्रीविवाह आसीत्,अत एव सपत्न्यो मिथः प्रद्वेषं कुर्वन्त्यो मन्त्रप्रार्थनया सपत्नीबाधनाय पत्युश्च स्ववशकरणाय तच्छिरसि–औषध्युपधानादिकं बहुविधमुपायमकार्षुः इति। यथाहि–'इमां खनाम्योषधिं, वीरुधं बलवत्ताम्। यया सपत्नीं बाधते, यया संविन्दते पतिम्॥' (ऋ० १०। १४६।१) अयमर्थः–इमामोषधिं पाठानामिकां आपस्तम्बगृह्यसूत्रे 'पाठां परिकिरति' इत्युल्लेखात्, पाठानामौषधिः खातव्या, तां हस्तयोराबध्य शय्याकाले बाहुभ्यां भर्तारं परिगृह्णीयात्, तेन वश्यो भवति पतिः, सपत्नीबाधनञ्च संपद्यते, इति च। वीरुधं=लतारूपां, बलवत्तमां=स्वकार्यकरणेऽतिशयेन बलवतीं, खनामि=उन्मूलयामि, सपत्नीं=समानः–एकः पतिर्यस्या सा। बाधते=हिनस्ति, पतिं=भर्तारं संविन्दते=सम्यगसाधारण्येन लभते।

द्वितीयेन मन्त्रेण सपत्नी ओषधिप्रार्थनां करोति, तत्प्रभावाच्च स्वाभीष्टसिद्धिकामनाञ्च प्रकटयति—'उत्तानपर्णे ! सुभगे ! देवजूते ! सहस्वति !। सपत्नीं मे पराधम, पतिं मे केवलं कुरु ।।' ( ऋ० १०।१४६।२ ) इति । उत्तानपर्णे= उत्तानानि-ऊर्ध्वमुखानि, पर्णानि=पत्राणि यस्यास्तादृशि ! हे सुभगे=सौभाग्यहेतुभूते ! हे देवजूते !=देवेन स्रष्ट्रा प्रेरिते! हे सहस्वति !=अभिभवनवति । ईदृशे हे पाठे ! मम सपत्नीं त्वं पराधम=परागमय-दूरीकुरु-मम पतिसकाशात् दूरं गमय । मे=ममैव केवलं=असाधारणं—पतिं कुरु । मयैव स उपभोग्यः स्यात्, नान्ययेति भावः ।

अनेन तृतीयेन स्वोन्नतेः परावनतेश्च सौन्दर्यादिप्रयुक्तस्वनिष्ठोत्कृष्टत्वस्य च भावना स्त्रीषु स्वाभाविकी वर्तत इति द्योत्यते—'उत्तराऽहमुत्तरे ! उत्तरेदुत्तराभ्यः । अथा सपत्नी या ममाधरा साधराभ्यः ।।' ( ऋ० १०।१४६।३ ) इति । हे उत्तरे !=उत्कृष्टतरे ! पाठे ! अहं उत्तरा=सौन्दर्ययौवनादिना उत्कृष्टतरा भूयासम् । उत्तराभ्यः=उत्कृष्टतराभ्योऽन्याभ्यो नारीभ्योऽपि, अहं उत्तरा—इत्=उत्कृष्टतरैव त्वत्प्रसादाद्भवेयम् । अथ=अनन्तरं, मम या द्वेष्या सपत्नी सा, अधराभ्यः= निकृष्टाभ्योऽपि नारीभ्यः, अधरा=निकृष्टतरा भवतु ।

सपत्नीनामाप्यहं नैव कथयामीत्यनेन चतुर्थेन द्वेषातिशयो अभिव्यज्यते, मम भर्तुः सकाशात् तां दूरादप्यतिदूरं च गमयामीति रूढवैरत्वं गम्यते—'न ह्यस्या नाम गृभ्णामि, नो अस्मिन् रमते जने । परामेव परावतं सपत्नीं गमयामसि ।।' (ऋ०१०। १४६।४) इति अस्याः=सपत्न्याः, नाम=संज्ञामपि नहि गृभ्णामि=नैव गृह्णामि—उच्चारयामि । नो=न खलु कदाचित्

अस्मिन् जने सपत्न्याख्ये रमते=क्रीडति मम मन इति शेषः, मम मनः तत्र कदापि नैवानुरागं बध्नातीति यावत् । अत एव तां द्वेष्यां सपत्नीं परां परावतमेव=अतिशयेन दूरदेशमेव गमयामसि=गमयामः-प्रापयामः, अतिशयेन स्वप्रियभर्त्रा वियोजयाम इत्यर्थः ।

अनेन पञ्चमेन सर्वथा सर्वदाऽहं सपत्न्याः तिरस्कारादिना अभिभवनशीला भवामीति बोध्यते–'अहमस्मि सहमानाऽथ त्वमसि सासहिः । उभे सहस्वती भूत्वी सपत्नीं मे सहावहै ॥' ( ऋ० १०।१४६।५ ) इति। हे ओषधे ! अहं त्वत्प्रसादात् सहमाना, अस्मि=सपत्न्या अभिभवित्री भवामि । अथ=अपि च त्वमपि सासहिः असि=तस्या अभिभवित्री भवसि । आवामुभे अपि, सहस्वती=अभिभवित्र्यौ भूत्वी=भूत्वा, मे=मम, सपत्नीं सहावहै=अभिभवाव इत्यर्थः ।

ओषधिप्रभावेणाहं पत्यु र्मनो मय्येव समासक्तं करोमीति षष्ठेन प्रतिपाद्यते–'उप तेऽधां सहमानामभि त्वाधां सहीयसा । मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ॥' (ऋ० १०।१४६।६) इति। हे प्रियपते ! ते=तव, सहमानां= सपत्न्याः अभिभवित्रीं, इमामोषधिं, उपअधां=शिरसि उपाधानं करोमि । सहीयसा=अभिभवितृतरेण तेनोपधानेन त्वां अभि अधां=अभितो धारयामि । ते=तव प्रियभर्तुः मनः मामनुलक्ष्य प्रधावतु=प्रकर्षेण शीघ्रं गच्छतु । तत्र निदर्शनद्वयमुच्यते-गौरिव= यथा गौः वत्सं प्रति शीघ्रं गच्छति, पथा=निम्नेन मार्गेण वारिव=वाः-उदकं यथा स्वभावतो गच्छति, तद्वत् । अनेन दृष्टान्तद्वयेन स्त्रियः स्वाभाविकपतिमिलनौत्सुक्यातिशयोऽभिव्यज्यते ।

## समालोचना

एकः पुरुषोऽनेकस्त्रीभिः सह विवाहादिना सहयोगं करोति चेत्, तदा विचारकैः सोऽयं सामाजिकदुर्नयोऽस्तीत्यभिधीयते। पुरुषाणामौद्धत्ययुक्तमुच्छृङ्खलत्वं स्त्रीणाञ्च वराकीणां पश्वादिवत् सार्तनादवैशिष्ट्यं सशृङ्खलत्वं द्योत्यते। अस्य दुर्नयस्य प्रतिषेधो भगवता वेदेन सबलशब्दैः कर्त्तव्य आसीत्। परन्तु कर्तव्यस्य प्रतिषेधस्य स्थाने सपत्नीबाधकसूक्तेनाकर्तव्यस्य सपत्नीग्रहणतद्द्वेषादेः प्रोत्साहनं विधीयते। तत्कथमपि समुचितं विचारकाणां न प्रतिभाति। सपत्न्याः कोऽयमपराधः ? अपराधोऽस्ति स्पष्टः पत्युः, तदकार्यकरणे प्रोत्साहनप्रदातुः समाजस्य च। अनेन सूक्तेन निरपराधस्य बाधनं, सापराधस्य चाबाधनं वैपरीत्यमेव प्रतिपाद्यते। कथं तया स्त्रिया तेन विद्यमानस्त्रीकेण पुरुषेण साकं विवाहो विहितः ? इति चेत्, तस्याः सर्वथा मूकगवादिपशुरिव पराधीनत्वादिति गृहाण।

गृह्यसूत्रेष्वापस्तम्बादिमहर्षिभिरपि—'एतत्सूक्तजपादिना सपत्न्याः विनाशो भवति, अतस्तद्देवताकमिदम्' इति चानुमोद्यते। सायणभाष्येऽपि 'अस्य सूक्तस्य विनियोगो भगवताऽऽपस्तम्बेन कस्मिंश्चित् सपत्नीघ्नप्रयोगविशेषे प्रदर्शितः।' इत्यभिहितम्। अपि च कस्याः सपत्न्याः प्राक्स्थितायाः पश्चादागतायाः वा विनाशो भवति ? इत्यपि चिन्त्यम्। प्रथमायाश्चेत् तस्याः विशेषाधिकारवत्त्वात्, द्वितीयायाश्चेत् पत्या प्रथमापेक्षया सौन्दर्यादिप्रयुक्तेन प्रेम्णा परिगृहीतत्वात्। अस्य सूक्तस्य जपानुष्ठानादिप्रयोगो मिथः सपत्नीभ्यां कृतश्चेत्, तदा द्वयोरेव विनाशः स्यात्। तथा च पतिगृहं गृहमेव न स्यात्, 'गृहिणी गृहमुच्यते' इति न्यायात्। सरागस्य तस्य पुरुषस्य निष्फलमेव

जीवनं संपद्येत, 'नाना नारी निष्फला लोकयात्रा ।' इत्युक्तत्वाच्च, पुत्रादिसन्ततिश्च मातृविहीना दयनीया संजायेत । अतः अस्य सूक्तस्य कोऽभिप्रायः? इति साधारणैर्जनै र्ज्ञातुं न शक्यते ।

सामाजिकनयः शास्त्रादेशश्च ईदृशो भवितव्य आसीत् । एकस्य पुरुषस्य कृतेऽन्यस्त्रीपरिग्रहाधिकार एव नास्ति । अन्यस्त्रीपरिग्रहोऽस्य महान् अपराधोऽस्ति । तत्प्रतिषेधार्थं पापनरकदुःखादेः सामाजिकदण्डराजदण्डयोश्च प्रतिपादनं कर्तव्यमासीत् । कन्यानां बहुत्वात् कुमाराणामल्पत्वाच्च तदानीं बहुपत्नीवादः प्रतिपादित आसीदिति चेत् । मैवम् । धनैश्वर्यादिसम्पन्नानां दृष्टयेदं कथनं, नाकिञ्चनदृष्टया । ते तु धनादिप्रभावेण भोगविलासकामनयैव बहुमनोरमभार्याः परिगृह्णन्ति । अत एव ब्राह्मणेन क्षत्रियादिकन्यानां, एवं क्षत्रियेण वैश्यादिकन्यानां परिग्रहोऽनुलोमविवाहलक्षणो विधातव्यः, परन्तु शूद्रादिभिः ब्राह्मणादिकन्यानां परिग्रहो निषिद्धप्रतिलोमविवाहवत्त्वात् न कर्तव्यः । अनेनेदं विज्ञायते—ब्राह्मणादयः समृद्धाः आसन्, शूद्रादयस्तु अकिञ्चनाः, कथमेवं कर्तुं शक्नुयुः ?। परन्तु एकेन तेन पत्या भूयसीनां पत्नीनां मनांसि कथं सन्तोष्टव्यानि स्युः?, यथैकया भार्यया भूयसां पतीनां मनांसि न च संतुष्टानि भवन्ति, तथा । पुरुषः किं बहुभार्याः समादाय सन्तोषभरितो भवति ? नैव भवति, 'बह्वयः सपत्न्य इव गेहपतिं लुनन्ति ।' (भा० ७। ९।४० ) इति न्यायेन प्रभूतसन्तापभरित एव भवति । भार्याश्च सपत्नीद्वेषकामानलसन्तापभरिताश्च भवन्ति । अकिञ्चनास्तु भार्यामन्तरेण सर्वथा सन्तप्यमाना रिक्तैव भवन्ति । अतोऽभ्युदयकामैः श्रीरामस्येव एकपत्नीव्रताख्यं चरित्तमुपादेयम् । न तु श्रीकृष्णस्य बहुभार्याग्रहणलक्षणम् । अपि च 'नियोगपर्यनुयोगा-

नर्हत्वात् भगवतो वेदस्य' इत्यास्तिकभावमनुरुध्य श्रद्धावनताना-मस्माकं नास्ति काचन समालोचना, न चास्ति किमपि वक्तव्यम्। तथापि—सर्वथा सर्वत्र सर्वदा एकपत्नीवाद एव एकपतिवाद एव च धर्म्यो न्याय्यः सुसंगत एव विज्ञेयः, न बहुपत्नीवादो न बहुपतिवादश्चेति सर्वेऽपि लोकहितचिन्तकाः प्रशस्ताः विचारकाः अभ्युपगच्छन्ति।

## किमस्य तात्पर्यम् ?

जायायै एकवचनं, तत्र बीजवपनादिकर्त्रे पुरुषाय च बहुवचनम्, बहुवारम्। किमस्ति तात्पर्यमत्र ? किं द्रौपद्यादिवत् एकस्या बहवः पतयः आसन् वैदिककाले इत्यनेन कल्प्यं स्यात्?। किमस्त्यत्र काव्यचातुर्यम्, इति विद्वद्भि विचारणीयम्। यथाहि—'तां पूषन ! शिवतमामेरयस्व, यस्यां बीज मनुष्या वपन्ति। या न ऊरू उशती विश्रयाते, यस्यामुशन्तः प्रहराम शेपम्॥' ( ऋ० १० ८५।३७ ) इति। अयमर्थः-तां वधूं शिवतमां=अत्यन्तमंगलभूतां कृत्वा सौन्दर्यलावण्यसौजन्यादिवैशिष्टयमेवास्याः शिवतमत्वं, एरयस्व=आ ईरय-मां प्रति प्रेरय। यस्यां=जायायां युवत्यां ऊरौ वा, बीजं=रेतो-वीर्यं, मनुष्याः=पुरुषाः वपन्ति=आदधते वीर्याधानं कुर्वन्ति। स्त्रियः किं मनुष्याः न भवन्ति ? अतः औचित्यात् भागत्यागलक्षणा कार्या मनुष्यपदेनोभयग्रहणे सति। या नः=अस्माक-पुरुषाणां, ऊरू उशती=कामयमाना, विश्रयाते=शयनं करोति, अस्माभिः सहेति शेषः। यस्यां जायायां, अपत्यानि उशन्तः=कामयमानाः वयं, शेपं=स्पर्शनयोग्यं शिश्नं प्रहराम-प्रक्षिपाम तस्य गुह्यस्थाने प्रक्षेपं करवामेत्यर्थः। यद्वा यस्यां=तस्या ऊरौ शिश्नसम्बन्धं करवामेत्यर्थः।

यद्यपि भूयःसु नारीक्षेत्रेषु एकः समर्थो वीर्यवान् पुरुषः सफलं बीजवपनं कर्तुं प्रभवति, वेश्यानारीक्षेत्रे तु बहूनां मनुष्याणां निष्फलं बीजवपनं स्यादपि। तथाप्येकस्मिन्नेव कुलवधूरूपे सुनारीक्षेत्रे बहवः पुरुषाः सफलं बीजवपनं कर्तुं कथं शक्नुयुः ? इति, तथा चात्र प्रतिपादितं पुरुषनिष्ठं बहुवचनं, नारीनिष्ठमेकवचनञ्च क्लिष्टतरं प्रतिभाति। यद्यपि 'मया पत्या' ( ऋ० १०।८५।३६ ) इति पूर्वमन्त्रवाक्येन स्पष्टं प्रतीयते, यत् कुलवधूनारीक्षेत्रस्य बीजवपनकर्ता एक एव पतिः पुरुषोऽर्हति, तदधिकारात्, नान्यः पतिभिन्नः कश्चन, तथाप्यत्रत्यमन्त्रस्थपुरुषगतक्रियागतबहुवचनस्य किं तात्पर्यमिति ? विद्वद्भिरन्वेषणीयम्। 'पुनः पतिभ्यो जायां दा अग्ने ! प्रजया सह।' ( ऋ० १०।८५।३८ ) पतिभ्यः=अस्मभ्यं, दाः=देहि, अत्रापि पतिनिष्ठबहुवचनं जायागतैकवचनकृतं शंकाशल्यम्। 'सोमः प्रथमो विविदे, गन्धर्वो विविद उत्तरः। तृतीयो अग्निष्टे पतिः, तुरीयस्ते मनुष्यजाः ॥' (ऋ० १०।८५।४०) इत्ति। कन्यामिति शेषः। विविदे=लब्धवान्, ते=तव पतिरित्यनुषङ्गः। पश्चात् मनुष्यजाः=मनुष्यपुत्राः ते इति प्रथमाबहुवचनं, ते=तवेति षष्ठी एकवचनं वा। अत्रापि 'मनुष्यजाः' इति बहुवचनस्य किं तात्पर्यम् ?

## महाभारतानुमतिः

अथवा—महाभारतस्यादिपर्वणि महाराज्ञीं कुन्तीं प्रति महाराजः पाण्डुः-'अनावृताः किल पुरा, स्त्रिय आसन् वरानने!। कामाचारविहारिण्यः स्वतन्त्राश्चारुहासिनि !॥ तासां व्युच्चरमाणानां कौमारात् सुभगे ! पतीन्। नाधर्मोऽभूद् वरारोहे ! स हि धर्मः पुराऽभवत् ॥ प्रमाणदृष्टो धर्मोऽयं पूज्यते च

महर्षिभिः । उत्तरेषु च रंभोरु ! कुरुष्वद्यापि पूज्यते ।। स्त्रीणामनुग्रहकरः, स हि धर्मः सनातनः । अस्मिंस्तु लोके न चिरान्मर्यादेयं शुचिस्मिते ! ।। स्थापिता येन यस्माच्च तन्मे विस्तरतः शृणु ।।' (अ० १२२।४-५-६-७-८-९) इति वदन् वैदिककाले प्रतिरोधरहितानां कामाचारविहारिणीनां स्वतन्त्राणामत एव कौमारादारभ्यानेकान् विद्यमानान् पतीन् परित्यज्य संप्रति श्रुतदृष्टयुरोपामरीकादिपाश्चात्यनारीवत् स्वेच्छावशात् इतस्ततो गच्छन्तीनां नारीणां भूयसीनां विद्यमानत्वात्, तदभिलक्ष्य 'यस्यां बीजं मनुष्याः वपन्ति' इत्यादि श्रौतं वचनं-अनेकपुरुषसम्बन्धबोधकप्रमाणरूपेण विज्ञापयति किम्? । अनावृताः=इतस्ततो गमने वा निवासे वा मनोज्ञमनुजैः सह हासपरिहाससहवासादिकरणे प्रतिरोधरहिताः, पुरा=आदिमे वैदिकयुगे, कामाचारविहारिण्यः=स्वेच्छानुसारेणानेकमानवैः सह विहरणशीलाः, वरानने!=सुन्दर-मनोहरमुखे !, चारुहासिनि!=मनोरममन्दहासोपेते ! सुभगे!, वरारोहे !=श्रेष्ठाङ्गप्रत्यङ्गारोहावरोहविशिष्टे ! रंभोरु ! =रंभा कदली, तत्स्तम्भवद् ऊरू सक्थिनी यस्याः, शुचिस्मिते=आह्लादकमन्दहासे! इति कुन्त्याः षट् सम्बोधनानि । प्रमाणदृष्टः=किं वेदादिशास्त्रप्रमाणेषु, एतादृशो धर्मो दृष्टोऽस्ति ? किं वा प्रत्यक्षादिभिः प्रमाणैर्दृष्टोऽयम् ? । पूज्यते=समाद्रियते । महर्षिभिः=साक्षात्कृतधर्मभिः-शिष्टैः-यथार्थदर्शिभिः, फलसाधनतांशे भ्रान्तिरहितत्वं शिष्टत्वमित्यभ्युपगमात् । अद्यापि स धर्मः, उत्तरेषु=उत्तरप्रदेशेषु, कुरुषु=धर्मक्षेत्रेषु कुरुक्षेत्रेषु पूज्यते=लोकैः समादरेणाङ्गीक्रियते, न तु गर्ह्यते । तथा चैकस्या नार्याः अनेकमानवसम्बन्धस्य नाधर्मत्वमपि तु वेदप्रमाणवर्णिततया महर्षिभिः श्रेष्ठ-

त्वेनानुमोदिततया च धर्मत्वमेव मन्तव्यम् । स च धर्मः कामिनीनां स्वेच्छाचारविहारिणीनां कृतेऽनुग्रहप्रयोजकः सनातनः=पुरातनोऽस्ति । एकपतिसम्बन्धस्य मर्यादा तु अचिराद् अर्थात् संप्रत्येव श्वेतकेतुना महर्षिणा स्थापिता । अत्र नैलकण्ठीय-भारतभावदीपव्याख्या-अनावृताः=सर्वैर्द्रष्टुं योग्याः । कामाचारः=रतिसुखं तदर्थं विहारिण्य=पर्यटनशीलाः, स्वतन्त्राः=भर्त्रादिभिरनिवार्याः । पतीन् व्युच्चरमाणानां=व्यभिरन्तानां ( व्यभिचारं कुर्वतीनां ) दृश्यते च वेदे 'न कांचन परिहरेत् ( छां २।१३ ) इति वामदेव्यव्रतेषु मैथुनार्थिन्याः स्त्रियाः प्रत्याख्याननिषेधः ।

## युधिष्ठिरकर्णसंमतिः

एवमनेकपतिवादो महाराजेन युधिष्ठिरेणापि-एकया द्रौपद्या सह पंचानां पाण्डवानां विवाहावसरे सदृष्टान्तमित्थं समर्थितः । युधिष्ठिर उवाच–'न मे वागनृतं प्राह, नाधर्मे धीयते मतिः । वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथञ्चन ।। श्रूयते हि पुराणेऽपि जटिला नाम गौतमी । ऋषीनध्यासितवती सप्तधर्मभृतां वरा ।। तथैव मुनिजा वार्क्षी, तपोभिर्भावितात्मनः । संगताऽभूद् दश भ्रातॄन्, एकनाम्नः प्रचेतसः ।। गुरोर्हि वचनं प्राहु र्धर्म्यं धर्मज्ञसत्तम ! । गुरूणां चैव सर्वेषां माता परमको गुरुः ।। सा चाप्युक्तवती वाचं भैक्ष्यवद् भुज्यतामिति । तस्मादेतदहं मन्ये परं धर्मं द्विजोत्तम ! ।।' ( म० भा० आदिपर्व–१९६–१४–१५–१६ ) इति । धीयते=प्रविश्यते । गौतमी=गौतमगोत्रप्रसूता, जटिलेति नामधारिणी, काचन ब्राह्मणकन्या, सप्त ऋषीन् पतिरूपेण, अध्यासितवती=आश्रितवती, तथापि सा धर्मभृतां वरा=श्रेष्ठैव मन्तव्या ।

मुनिजा= मुनिकन्या, वार्क्षी=वृक्षात् समुत्पन्ना-यद्वा एतन्नाम्नी। भावितात्मनः=कृतविशुद्धमन इन्द्रियान्। एकनाम्नः=एकसंज्ञा-धारिणः। संगता=विवाहिताऽभूत। भैक्ष्यवत्=द्रौपदी-कृष्णा संमिल्य भुज्यतां=क्रमश उपभोगं क्रियतां भवद्भिः पञ्चभि-र्भ्रातृभिः इति मातुः कुन्त्याः आदेशोऽयमस्माभिर्धर्मबुद्ध्या परिपालनीय एव। यदा तस्याः सप्तपतिसमाश्रयेणापि अधर्मस्य न लवलेशः संजातः, तदा पञ्चपतिसमाश्रयेण द्रौपद्याः कथ-मधर्मलेपः स्यादिति भाव.। अत एवान्ते-वैशम्पायन उवाच— 'ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने। आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता॥' ( म० भा० आदिपर्वणि० १९८।२३ ) इति। द्वैपायनः=व्यासः, नरेन्द्राय=द्रुपदाय-द्रौपदीपित्रे इत्यर्थः।

एवं महाभारतस्यादिपर्वणि—एकाधिकद्विशततमाध्याय (२०१) समुदारदात्रा यशस्विना कर्णेन दुर्योधनं प्रतीत्थमुक्तम्— भो दुर्योधन ! त्वया पाण्डवेषु मिथो विच्छेदभावो न स्थापयितुं शक्यो भवति केनाप्युपायेन। 'परस्परेण भेदश्च नाधातुं तेषु शक्यते एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परम्॥६॥ न चापि कृष्णा शक्येत, तेभ्यो भेदयितुं परैः। परिद्यूनान् वृत-वती, किमुताद्य मृजावतः॥७॥ ईप्सितश्च गुणः स्त्रीणामेकस्याः बहुभर्तृता। तं च प्राप्तवती कृष्णा, न सा भेदयितुं क्षमा॥८॥' इति। तेषु=पाण्डवेषु भेदः 'फूट' इति भाषायाम्। कृष्णा= द्रौपदी परैः=अन्यैः, परिद्यूनान्=भिक्षाभोजिनोऽकिञ्चनान् दीनहीनान् तानभिवीक्ष्यापि यदा सा वृतवती=पतित्वेन स्वीकु-र्वती बभूव,तदाऽद्य तु मृजावतः=प्रभूतसंपत्तिशालितया परिपुष्ट-स्वच्छसुन्दराङ्गान् तान् कथं परित्यजेत्? कथं न स्वीकुर्यादिति। ईप्सितः=अभिलषितः, गुणः=कामुकस्त्रीदृष्ट्या गुणोऽपि

पुरुषदृष्टयाऽनिष्टो दोष इति भावः। अनेन कर्णेनापि, एकस्याः कामिन्याः कृते बहुपतिवादः, अभीष्टगुणत्वेन प्रतिपादित आसीदिति।

## मर्यादास्थापनप्रयोजकम्

श्वेतकेतुना कदा कस्मात् कारणाच्च कीदृशी च मर्यादा स्थापिता ?, इत्यत्रास्ति-ईदृशो वृत्तान्तः–'बभूवोद्दालको नाम महर्षिरिति नः श्रुतम्। श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ॥' ख्यातः=छांदोग्योपनिषदः षष्ठाध्याये श्वेतकेतुः नववारं तत्त्वमसीति महावाक्यस्य पितुरुद्दालकात् सदुपदेशग्राहकत्वेन प्रसिद्धोऽस्ति। 'मर्यादेयं कृता तेन, धर्म्या वै श्वेतकेतुना। कोपात् कमलपत्राक्षि! यदर्थं तान्निबोध मे॥ श्वेतकेतोः किल पुरा, समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत्॥ ऋषिपुत्रस्ततः कोपं चकारामर्षचोदितः। मातरं तां तथा दृष्ट्वा नीयमानां बलादिव॥ क्रुद्धं तं तु पिता दृष्ट्वा, श्वेतकेतुमुवाच ह। मा तात! कोपं कार्षीस्त्वमेष धर्मः सनातनः॥ अनावृता हि सर्वेषां वर्णानामङ्गना भुवि। यथाभावं स्थितास्तात! स्वे स्वे वर्णे तथा प्रजाः॥ ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतु र्न चक्षमे। चकार चैव मर्यादामिमां स्त्रीपुंसयो र्भुवि॥ व्युच्चरन्त्याः पतिं नार्या अद्य प्रभृति पातकम्। भ्रूणहत्या समं घोरं भविष्यत्यसुखावहम्॥ भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम्। पतिव्रतामेतदेव भविता पातकं भुवि॥ इति तेन पुरा भीरु! मर्यादा स्थापिता बलात्। उद्दालकस्य पुत्रेण धर्म्यो वै श्वेतकेतुना॥ (म० भा० आदिपर्व० अ० १२२।४।१०-११-१२-१३-१४-१५-१६-१८-१९-२१) इति। कश्चनोच्छृङ्खलः कामी ब्राह्मणः श्वेतकेतुमातरं वदति स्म गच्छावः=आवां

अन्यत्र गमनं कुर्वः, यत्र किलावयोः परस्परं स्नेहसिक्तयो र्यथे-ष्टविहारः स्यादिति। स्त्रीणां स्वेच्छाचारः सनातनो धर्मोऽस्ति। अतस्त्वया श्वेतकेतुना कोपो न कर्तव्योऽधर्मत्वाभावात्। वर्णानां=सर्वेषां ब्राह्मणादीनां अंगनाः=स्त्रियः, भुवि=लोके, अनावृताः=प्रतिरोधरहिताः सन्ति। यथा पशुपक्ष्यादिप्रजाः स्वस्मिन् स्वस्मिन् वर्गे यथा स्वच्छन्दतो विहरन्ति, तथा मनुष्य-प्रजाः, यथाभावं=स्वस्व भावमनतिक्रम्य विहरन्तु, अत्र नास्ति कश्चन दोष इत्यर्थः। असुखावहं=दुःखप्रापकम्।

नीलकण्ठव्याख्यानमत्र—न चक्षमे=न क्षमां कृतवान् (न सहनं चकार) 'यथा स्तेनो यथा भ्रूणहा, एवमेष भवति, योऽयोनौ रेतः सिञ्चति।' (काचन श्रुतिः) इति। अयोनौ=अन्यदारेषु पुंसां गमनात् प्रत्यवायः श्रुतिसिद्धः। तथा 'अमीषां निष्कृतं जारिणीव' इति मन्त्रे जारिण्याः निष्कृतेः=पीडायांश्च दर्शनात्, स्त्रीणामपि परसंगे दोषोऽस्त्येवोक्तः। तथापि श्रौतार्थस्यैव कयाचिद्भंग्या व्यवस्थेयं विहितेति ज्ञेयम्। अथवा व्युच्चरणे तेजस्विनां न दोषः, किन्तु पृथग्जनानामेवेति तात्पर्यम्। अन्यथा कृष्णस्यापि पारदार्यदोषप्रसक्तेः ('परदाररतः कृष्णः' इत्युक्त-त्वात्)। अहल्यादिजाराणामिन्द्रादीनां तदप्रसक्तेश्चेत्यास्तां तावत्।

## अग्निदेवचरितं, वरदानं, किमिदमस्ति तात्पर्यञ्च

महाभारतस्य सभापर्वणि सहदेवदिग्विजयप्रसंगे माहि-ष्मत्यां नगर्यामग्निदेवस्येदं चरितं निरूप्यते। यथाहि—'तत्र माहिष्मतीवासी भगवान् हव्यवाहनः। श्रूयते हि गृहीतो वै पुरस्तात् पारदारिकः॥ नीलस्य राज्ञो दुहिता बभूवाऽतीव-शोभना। साऽग्निहोत्रमुपातिष्ठद् बोधनाय पितुः सदा॥ व्यजनै-

धूयमानोऽपि तावत्प्रज्वलते न सः। यावच्चारुपुटौष्ठेन वायुना न विधूयते ।। ततः स भगवान् अग्निश्चकमे तां सुदर्शनाम्। ततो ब्राह्मणरूपेण रममाणो यदृच्छया। चकमे तां वरारोहां कन्यामुत्पललोचनाम् ।' ( अ० ३१.२७.२८-२९-३०-३१ ) इति। पारदारिकः=परदाररतः, तया रममाणः। दुहिता= कन्या, अतीवशोभना=अनुपमसुन्दरी। साऽग्निहोत्रस्य समीपे बोधनाय=अग्निप्रज्वलनाय, अवस्थिताऽभवत्। व्यजनैः= तालवृन्तकैः, 'पंखा' इति भाषायाम्, धूयमानः=तज्जन्यवायुना समुद्दीप्यमानोऽपि। यावत्पर्यन्तं-तस्याः सुन्दर्याः चारुणा=सुन्दरेण पुटवत्=संपुटवत् संमिलितेनौष्ठेन, तज्जन्येन वायुना न विधूयते=न समुद्दीप्यते। चकमे=कामयामास। यदा राजा नीलः स्वकन्याकामुकं तमग्निदेवमवारुधत्। तदा सो ब्राह्मणवेषधारी अग्निदेवः कोपात्प्रजज्वाल। तत्कोपभीतो राजा विप्ररूपाय वह्नये शिरसा नतः सन् तां स्वकीयां मनोहरां कन्यां प्रददौ। तां नीलराज्ञः सूभ्रूं सुतां परिगृह्याग्निदेवः प्रसन्नोऽभूत्। पुनस्तेन तस्मै महीपतये स्वसैन्यस्य शत्रुकृतभयाभावलक्षणो वरो दत्तः। अज्ञानाद्यदा केचन राजानो तां माहिष्मतीं पुरीं जेतुमभिजग्मुस्तदा तेनाग्निना सद्यो दह्यमाना बभूवुः। ईदृशमस्ति अग्निदेवचरितम्।

यद्यपि तस्यां नगर्यां प्रागपि योषितः स्वच्छन्दतः स्वेच्छानुसारेण स्वयोग्यं वरं वरयामासुः। बलात् ताः अन्यैः स्वेच्छाप्रतिकूलैर्जनैः अतिशयेन ग्राह्या न बभूवुः। तथापि प्रसन्नेन तेनाग्निदेवेन तत्रत्याभ्यः सर्वाभ्यः स्त्रीभ्यः स्वतन्त्ररूपेण यथाकामविहाराय केनापि प्रतिरोद्धुमशक्यलक्षणो वरो दत्तः। 'तस्यां पुर्यां तदा चैव, माहिष्मत्यां कुरूद्वह!। बभूवुरनतिग्राह्या

योषितश्छन्दतः किल ।। एवमग्नि र्वरं प्रादात् स्त्रीणामप्रतिवारणे । स्वैरिण्यस्तत्र नार्यो हि यथेष्टं विचरन्त्युत ।।' (म० भा० सभापर्व० ३१।३८-३९) इति । स्वैरिण्यः=स्वतन्त्राः-व्यभिचारिण्यः-परपुरुषगामिन्य इत्यर्थः ।

अनेनेदं किं तात्पर्यमभिव्यज्यते-यत् तत्र भूप्रदेशे यज्ञवेद्यां सुन्दरीयुवतिकुमारिकाचारुपुटौष्ठजन्येन वायुनाऽग्निः प्रज्वलितः कर्तव्य इति विधानमभूदिति । सुन्दरदर्शनमग्निहोत्रिणामपि मन आह्लादयतीत्यवर्णकथितमेतत् । 'अग्निदेवो ब्राह्मणो भूत्वा तां कन्यां बुभुजे' इत्यस्य किमिदं तात्पर्यं कल्प्यं स्यात् ? अग्निसमुपासकोऽग्निहोत्री ब्राह्मणोऽहमेवाग्निरस्मि, दीयतां मह्यं मम प्रेयसीं तव सुन्दरीं कन्याम्, न चेत् शापं दास्यामि । शापभीतेन राज्ञा तस्मै स्वकन्यादानं कृतमिति । यदि वस्तुतोऽलौकिकोऽग्निदेव एव स्वीकृतः स्यात्तदा—'नैषां (देवानां) शिश्नं प्रदहति जातवेदाः ।' (अथर्व० ४।३४।२) इति श्रौतं वचनं व्याकुप्येत । जातवेदाः=कामाग्निः । अनेन देवानां निष्कामत्वं बोध्यते । भवतु नाम यत्किमपि । परन्तु तत्रत्यनिखिलस्त्रीणां कृते स्वेच्छाविहारलक्षणो वरस्तु न वरोऽपि त्वभिशाप एवास्तीति मन्ये ।

## यथार्थं समाधानम्

यद्यपि प्राक्प्रदर्शितेषु द्वित्रेषु मन्त्रेषु राजसतामसमानवानुद्दिश्य लोकस्थितिञ्चानुसृत्य बहुपत्नीवादो बहुपतिवादश्चापाततः प्रतीतो भवति । तथापि सात्त्विकान् सदाचारनिष्ठान् मानवानुद्दिश्य धर्मन्यायोपेतः एकपत्नीवाद एकपतिवाद एव च भूयःसु मन्त्रेषु स्पष्टतयाऽवगतो भवति । यथाहि—'जायेव पत्य उशती सुवासाः' ( ऋ० १०।७१।४ ) 'पतिरिव जायाम्'

(ऋ० १०।१४६।४) 'आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व' (ऋ० १०।८५।२०) 'मोदमानौ स्वे गृहे (पतिश्च पत्नी चेमौ द्वौ) विश्वमायु र्व्यश्नुतम्, मा वियौष्टम् ।' (ऋ० १०।८५।४२) 'चक्रवाकेव दम्पती' (जाया च पतिश्चेमौ द्वौ दम्पती इत्युच्यते) (अथर्व० १४।२।६४) 'वीरा अनवद्या पतिजुष्टव नारी' (ऋ० १।३। ) 'जास्पत्यं सुयमस्तु देवाः'× (ऋ० १०।८५।२३) 'समञ्जन्तु विश्वेदेवाः ! समापो हृदयानि नौ । सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ।।' (ऋ० १०।८५।४७)+ 'स्योना पत्ये भव' (अथर्व० १४।२।२७ )

×उशती=कामयमाना, सुवासाः=शोभनवसना, पत्ये=भर्त्रे । हे सूर्ये!=सूर्यवत् तेजस्विनि ! नारि ! लोकं=स्थानं, स्योनं=सुखकरं, पत्ये=स्वामिने, वहतुं=वहनमात्मनः प्रापणं, कृणुष्व=कुरुष्व । विश्वं=निखिलं, आयुः=जीवनं, व्यश्नुतं=प्राप्नुतम् । मा वियौष्टं=कदाचिदपि पृथग्भूतौ मा भवेताम् । पतिजुष्टा=पत्या प्रेम्णा सेविता । जास्पत्यं=जायापत्यो र्युगलं, सुयमं=सुमिथुनं-सुखकरं-शोभनसंयमोपेतं वा ।

+विश्वे=सर्वे देवाः, नौ=आवयोः-पतिपत्न्योः हृदयानि=मानसानि, सं=सम्यक् अञ्जन्तु=अपगतदुःखादिक्लेशानि कृत्वैहलौकिकपारलौकिकादिविषयेषु शान्तिसुखप्रकाशयुक्तानि कुर्वन्त्वित्यर्थः । मातरिश्वा=वायुः, संदधातु=आवयो र्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः । देष्ट्री=फलानामभीष्टानां दात्री सरस्वती देवी श्री र्वा । स्योना=उभयकुलस्य स्नेहेनानुस्यूतकर्तृत्वात् तज्जसुखप्रदतया पत्नी स्योनेत्युच्यते। अनुव्रता=अनुकूलकर्मा अहं पतिः,द्यौरिव-उपरि स्थितः सन् अभीष्टसुखप्रवर्षणशीलोऽस्मि, त्वं पृथिवीवत् अधःस्थिता अभीष्टपुत्रादिसुखप्रसवित्री असि ।

'पत्युरनुव्रता भूत्वा'(अथर्व० १४।१।४२)'इयं नारी उपब्रूते ··· दीर्घायुरस्तु मे पतिः, जीवाति शरदः शतम् ।' (अथर्व० १४। २।६३) 'द्यौरहं पृथिवी त्वम्' ( अथर्व० १४।२।७१ ) 'पत्नी त्वमसि धर्मणाऽहं गृहपतिस्तव ।'(अथर्व० १४।१।५१)'गृह्णामि (गृभ्णामि) ते सौभगत्वाय(तव-भार्यायाः सौभाग्याय)हस्तम् । मया पत्या ।' ( अथर्व० १४।१।५० ऋ० ८।३।२७ ) 'मह्यं त्वाऽदुर्गार्हपत्याय देवाः'(अथर्व० १४।१।५०)'ममेयमस्तु पोष्या' ( अथर्व० १४।१।५२ ) 'मया पत्या प्रजावती संजीव शरदः शतम् ।' 'परिष्वजस्व जायां सुमनस्यमानः प्रजां कृण्वाथामिह मोदमानौ दीर्घं वामायुः सविता कृणोतु ।' अथर्व० १४।२।३६) 'भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जनेचित् ।' (ऋ० १०।२७।१२) 'जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ।' (अथर्व० ३।३०।२) इत्यादिभि र्भूयोभि र्मन्त्रै र्भगवता वेदेन स्पष्टमेव पत्यौ जायायाञ्चैकवचनप्रदानेन चक्रवाकदृष्टान्तेन मिथो विविधाभीष्टसुखलाभप्रार्थनाभिश्च एकपतिवादः एकपत्नीवाद एव च विहितः समर्थितश्च ।

एवं बहुपत्नीवादः—'सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।' ( ऋ० १०।३३।२ ) 'उभे धूरौ वह्निरापिब्दमानोऽन्तर्योनेव

---

धर्मणा=धर्मेण । गार्हपत्याय=गृहपते र्मम शोभनकर्माणि संपादयितुमेव देवास्त्वां धर्मपत्नीं मह्यं=पत्ये-भर्त्रे, अदुः=दत्तवन्तो देवा इत्यर्थः । यत्=या, भद्रा=कल्याणी सुपेशाः=शोभनरूपसौन्दर्यलावण्यवती वधूर्भवति, सा द्रौपदीसीतादिवत् स्वयं=आत्मनैव, जनेचित्=आर्यजनमध्ये अवस्थितं मित्रं=प्रियं पतिं अर्जुनरामादिवत्, वनुते=याचते-वृणोति-स्वयंवरधर्मेण प्रार्थयते इत्यर्थः ।

चरति द्विजानिः ।' (ऋ० १०।१०१।११) +इत्यादिभि र्मन्त्रैः प्रभूतसन्तापहेतुतया विनिन्दितः । अत एव सर्वथा हेयतया च प्रतिपादितोऽवगम्यते । द्विजानिदृष्टान्तेन च द्वयो र्जाययोः पत्युः सदा पराभवो द्योत्यते, कैमुत्यन्यायेन चार्थतो द्वाभ्यामधिक-जायाग्राहकानां मानवानां दुर्दशा च बोध्यते ।

## सपत्नीबाधनसूक्तस्य तात्पर्य-प्रदर्शनम्

एवं सपत्नीघ्नसूक्तेनापि—अनेकपत्नीवादोऽर्थात् भगवता वेदेन निन्दितोऽस्तीति विदुषां तत्तात्पर्यं प्रतिभाति । कथं? इत्थं, यस्मिन् गृहे सपत्नीनां परस्परं ईदृशो द्वेषः कलहश्च सर्वदा प्रवर्तमानो भवति, तस्मिन् गृहेऽवस्थितस्य गृहपतेः कथमपि शान्तिसुखोपलब्धि र्न भवति, प्रत्युत तेन सन्तापपरम्परैवानु-भूयते, इति लोकेऽपि प्रत्यक्षमतः स्पष्टं प्रभूतसन्तापजनकतया बहुपत्नीवादो निन्दितोऽस्तीति । अत एव गृहपते र्दुर्दशाबोधनाय सपत्नीसूक्तस्य वर्णनं क्रियते भगवता वेदेन, न त्वेकस्य कृते बहुपत्नीविधानायेति सर्वमनाविलम् ।

---

+मा=मां-देवताप्रसादरहितं कवषं, पर्शवः=पार्श्वास्थीनि, अन्नाभावाद् दौर्बल्यात् कुशयनाच्च सपत्नीरिव=यथा सपत्न्यो गेहपतिं सं तपन्ति=संतापं ददति, तथा अभितः=सर्वतः सं तपन्ति=दुःखयन्तीत्यर्थः । हविर्धानशकटस्य उभे धूरौ आपिब्द-मानः=आपिशब्दमानः, वह्निः=हविर्वाहिकोऽनड्वान् अश्वो वा । योनौ अन्तः=तयो र्द्वयो र्धुर्योः अन्तः=मध्ये प्रविष्टः सन्, इव=यथा द्विजानिः=द्विजायः—भार्याद्वयवान् मानवः तयो र्द्वयोः पर-स्परं द्वेषकलहादिकुर्वत्यो र्मध्ये प्रविष्टो चरति=दुःखमेवानु-भवति, तथा ताभ्यां द्वाभ्यां समाक्रान्तः सन् चरति=दुःखमनु-भवन् गच्छतीत्यर्थः ।

अत एव केचन विद्वांसः—एकस्य विश्वपतेः सर्वात्मनः परमेश्वरस्य 'अहोरात्रे पार्श्वे' ( शु० यजुः० ३१।२२ ) इति श्रुत्याऽर्थात्—'विद्याऽविद्ये मम तनू' बन्धमोक्षकरी, बन्धोऽस्याविद्ययाऽनादि विद्यया च तथेतरः (मोक्षः) । (भा० ११।११।३-४) इति वेदार्थं विवृण्वता श्रीमद्भागवतेन स्पष्टतो ज्ञापिते शक्तिभूते विद्याऽविद्यालक्षणे द्वे भार्ये स्तः, अत एव विद्यया देव्या अविद्यारूपायाः सपत्न्याश्चैतन्यपतिसमाश्रितायाः सन्तापप्रदायाः सर्वथा बाधनं प्रार्थ्यत एव, क्रियत एव च। यद्वा-एकस्य जीवात्मनः सुमतिकुमतिलक्षणे द्वे भार्ये तदधीने स्तः, सुखसंपत्प्रदया सुमतिदेव्या 'प्रकाशेनान्धकारस्येव' कुमतिरूपायाः दुःखविपत्प्रदायाः सपत्न्याः बाधनं क्रियत एव। तद्बाधनायात्र क्रियमाण औषधिप्रयोगस्तु सत्संगप्रभवविचार एव वेदितव्यः। तदुक्तं—भगवत्पादेन प्रश्नोत्तरीग्रन्थे—'को दीर्घरोगो ? भव एव साधो ! किमौषधं तस्य विचार एव।' इति। सति चैवं सर्वमपि सपत्नीघ्नसूक्तं—एतादृशार्थानुकूलपरतयैव योजयन्ति।

अपि च—'न देवचरितं चरेत्' इति न्यायेन ये देवतुल्याः समर्था महर्षयः विशिष्टजन्मानो द्रौपदीजटिलापाण्डवादयश्च सन्ति, तेषु पर्यनुयोगायोगात्, तच्चरितानुकरणस्य सामर्थ्यहीनैर्जनैः कर्तुमशक्यत्वाच्च, इदानींतनानां द्वित्रादिपतिपत्नीविशिष्टानां यत्र कुत्रापि त्रिविष्टपादौ वर्तमानानां पशुप्रायाणामाचारस्याप्रामाण्याच्च। भगवदवतारभूतस्य श्रीकृष्णस्यापि लोकोत्तरं चरितं—'कृत्वा तावन्तमात्मानं यावती गोंपयोषितः।' ( भा० १०।३३।२० ) 'अन्याश्चैवंविधा भार्या कृष्णस्यासन् सहस्रशः।' ( भा० १०।५८।५८ ) 'यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः।' ( भा० १०।५६।४२ ) 'तमेव सर्वगेहेषु सन्तमेकं

ददर्श ह। कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् ॥' (भा० १०।६९।४१ ४२) इत्यादिलक्षणं 'एकोऽहं बहुस्यां, प्रजायेय' (छां० उ० ६।२।३) इति श्रौतार्थस्य स्वविग्रहे, भगवत्तमत्वस्य च प्रदर्शनायाविष्कृतं—एकपत्नीवादं न विरुणद्धि, किन्तु बिभर्त्येव।

अत एव वेदार्थज्ञेन भगवता मनुनाऽपीत्थमुक्तम्—'अन्योऽन्यस्याव्यभिचारो भवेदामरणान्तिकः। एष: धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥ तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ। यथा नाभिचरेतां तौ वियुक्ताावितरेतरम् ॥ (म० स्मृ० ९। १०१-१०२) इति। भार्यापत्यो र्मरणान्तं यावद् धर्मार्थकामेषु परस्पराव्यभिचारः=मिथो निःस्वार्थस्नेहसम्बन्धः अर्थात् अन्यस्मिन् पुंसि वाऽन्यस्यां नार्यां वा कदापि व्यभिचारो न स्यादित्येव संक्षेपतः स्त्रीपुंसयोः प्रकृष्टो धर्मो ज्ञातव्यः। कृतक्रियौ=कृतविवाहौ। तथा सदा यत्नं कुर्यातां, यथा धर्मार्थकामविषये वियुक्तौ सन्तौ परस्परं न व्यभिचरेतामित्यर्थः। किन्तु सदा परस्परं प्रेमसद्भावाभ्यां संयुक्तावेव भवेतामिति यावत्। इत्यलं पल्लवितेन।

## विविधसंप्रदाय-पन्थ-मतसंपादितविच्छेदभावना

भारतवर्षे सन्ति विविधसंप्रदायविभिन्नमतपन्थाः, तेषां विभिन्नानि नामानि, विविधाश्च साधवो हरिद्वारप्रयागादिकुंभपर्वोत्सवावसरे विशेषप्रयत्नतो विज्ञायन्ते। यथा (१) दण्डी संन्यासी (२) परमहंसदशनामसंन्यासी (३) नागासंन्यासी (४) वैरागी (५) उदासी (६) निर्मला (७) कबीरपन्थी (८) दादुपन्थी (९) चरणदासी (१०) निराकारी (११) पानवदासी (१२) गरीबदासी (१३) लालपन्थी

(१४) बुनियादासी (१५) राधास्वामी (१६) दरियादासी (१७) पलटुदासी (१८) जगजीवनपन्थी (१९) घीसापन्थी (२०) मोहनपन्थी (२१) खिचड़ापन्थी (२२) कुण्डापन्थी (२३) बीजमार्गी (२४) वाममार्गी (२५) चोलीमार्गी (२६) स्वामी नारायणः (२७) गुलाबदासी (२८) कापडीपन्थः (२९) तुलसीसाहेब पन्थः (३०) भाणसाहेबपन्थः (३१) रविसाहेबपन्थः (३२) गोस्वामी पन्थः (३३) संयोगी पन्थः (३४) नित्यानन्द-प्राणगोपन्थः (३५) कानफटानाथ-पन्थः (३६) ओघड़नाथ-पन्थः (३७) जंगमपन्थः (३८) सेवडापन्थः (३९) जैनसाधुपन्थः (४०) बौद्धसाधुपन्थः (४१) सुथराशाहीपन्थः (४२) रामानुजसंप्रदायः (४३) मध्वसंप्रदायः (४४) निम्बार्कसंप्रदायः (४५) वल्लभसंप्रदायः-हवेलीपन्थः (४६) राधावल्लभसंप्रदायः (४७) गौरांगमहाप्रभुसंप्रदायः (४८) शैवसंप्रदायः (४९) सखीसंप्रदायः (५०) भीनकपन्थी (५१) सेवापन्थी (५२) प्रेमपन्थी (५३) बेनामीपन्थः (५४) प्रणामीपन्थः (५५) काचूकटियापन्थः (५६) ब्रह्मसमाजः (५७) आर्यसमाजः (५८) प्रार्थना-समाजः (५९) सन्तदासी (६०) मदनपन्थी (६१) योगीपन्थः (६२) रामस्नेही (६३) वीरशैवपन्थः (६४) लिङ्गायतपन्थः (६५) अघोरीपन्थः (६६) व्यासपन्थी (६७) सन्तरामसाधुपन्थः (६८) कुबेरदासपन्थः (६९) अकालीपन्थः (७०) पीराणापन्थः (७१) शाक्तसंप्रदायः (७२) गाणपत्यसंप्रदायः (७३) सौरसंप्रदायः, आदिः आदिः ।

तेषां समेषां विविधाः उपास्याः, मतभेदाः विभिन्नाश्चाचाराः पृथक् पृथक्—तिलकादिवेषभूषाश्च सन्ति । केचन मूर्तिपूजां

मन्वते, केचन न, केचन च स्वधर्मग्रन्थमेव गुरुरूपेणेश्वरविग्रह-रूपेण च पूजयन्ति। केचन भगवन्तं निराकारमेव, केचन साकारमेव, केचनोभयमपि। केचन स्वकरनिर्मितमन्यास्पृष्टमेव भोजनं कुर्वन्ति, केचन सर्वस्य भोजनमङ्गीकुर्वन्ति। केचन तीर्थान्यटन्ति, केचन तीर्थाटनं खण्डयन्ति, एवं स्वस्वमतपक्षं वाद-विवादद्वारा समर्थयन्ति, परपक्षञ्च प्रतिषेधन्ति। तेषु केचन मतपन्थास्तु दम्भपाखण्डतुच्छस्वार्थादिकं पुरस्कृत्य हिन्दुत्व-भारतीयत्वसमाजैकत्वप्रशस्तभावनां मूलत एव प्रतिघ्नन्ति। तेष्वयमेकः।

## राधास्वामीपन्थः

एतस्य पन्थस्य विच्छेदभावना पाखण्डप्रचारश्च तावदव-लोक्यताम्। तत्प्रणीतहिन्दीग्रन्थेषु-राधास्वामी हिन्दुधर्मं न मनुते, न श्रुतिं, न स्मृतिं, न पुराणानि च, न रामं, न कृष्णं, न शिवं, न शक्तिं च मनुते, न गंगां न यमुनां, न हिमालयं, न सूर्यं, न चन्द्रं च मनुते, न पूज्यां मातरं भारतभूमिमपि मनुते, न जपज्ञानध्यानानि च आत्मपरात्मपरमेश्वरादिकमपि, न च भारतीयसंस्कृतिञ्च× किन्तु एकमात्रं तत्पन्थस्य प्रणेतारं श्री-शिवदयालसिंहनाम्ना प्रसिद्धं आग्रापत्तने लब्धजन्मानं राधा-

---

×राधास्वामी माने न धर्मकर्मरी। राधास्वामी माने न रामकृष्णरी। राधास्वामी माने न सूर्य चन्द्ररी, न गङ्गा जमुनरी (सा० व० ८। पृ० १५२) श्रुतिस्मृतिजालफैलाया (सा० व० २२) न हि आत्म-परमात्म मानूं।' षट्शास्त्र और चारों वेदा, यह सन्तन ने किया निषेधा। ब्रह्म विष्णु महेश भुलानी—शेष गनेश कुरम अज्ञानी। वेद शास्त्र और सिमृति पुराना,

स्वामिनमेव तदनुयायिनो मन्वते । राधास्वामिशब्दसास्येन हिन्दूनां भावुकानां विवेकहीने मनसि भ्रान्तिर्जायते, यत् राधा-स्वामी तु श्रीकृष्ण एव । वस्तुतो राधा श्रीशिवदयालसिंहस्य पत्न्येवास्ति । उत्तरप्रदेशस्यागराकाशीप्रभृत्यनेकस्थानेषु तेषा-मालया विद्यन्ते । तेष्ववस्थिताः साहेबपदवाच्याः तत्पन्थप्रचा-रकाः प्रतारक–दलाल द्वारा सर्वत्र दम्भ-पाखण्डमेव विस्तार-यन्तो विशेषबुद्धिहीनान् हिन्दून् मिथ्यावाग्जालैः प्रवञ्चयन्ति । केचनालसाः प्रमादिनो बहिश्चित्ताः हिन्दवो मोक्षस्य सरलाति-सरलं सुलभं साधनं लब्धुमभिलषन्ति । यस्य कृते प्रमादालस्य-विषयानुरागमोहममतादिकं न त्यक्तव्यं स्यात्, हृदयेऽवस्थिताः राजसतामसभावा न च हातव्या भवेयुः, न किमपि जपध्याना-दिकं साधनमनुष्ठातव्यं भवेत् । अनायासतः सद्यः शाश्वता-नन्दपूर्णस्य मोक्षस्य लाभः संपन्नो भवेदिति वाञ्छन्ति । अत एव तत्प्रयोजिता दलालाः–प्रमादिनां तेषां धनिकानां हिन्दूनां नरनारीणां तद्धनापहरणकामाः तत्समीपं गत्वेत्थं मिथ्याप्रवा-दान् कथयन्ति । मोक्षस्य तीव्राभिलाषावन्तो वयं प्राक् हरिद्वारे काश्यां हिमालयस्योत्तरकाश्यामयोध्यायां वृन्दावने चावस्थितानां प्रसिद्धानां महात्मनां सतां समीपं गत्वा मोक्षलाभाय विविधान् महतः प्रयत्नान् अकार्ष्म । परन्तु तैर्न मनागपि लाभः सम्पन्नः अनेकसंवत्सरकृतप्रयत्नानां वैफल्यं जातम् न कुत्रापि भगवतो

---

पढ़ना इनका वृथा जाना । (सा० व० ३। ८) मेरे नज़दीक हुए हिन्दु मुसलमां काफिर ।' (मा० वा० २१) ज्ञान-ध्यान और जोग विरागा । तुच्छ समझ मैंने इनको त्यागा । (सा० व०) ऋषि-मुनि सब धोखा खाया, क्या व्यास वसिष्ठ भुलाया । रामकृष्ण दोनों तज डार ।' (सा० भा० २। १२) ।

दर्शनं लब्धम् । न चात्मज्ञानं यथार्थमपरोक्षं प्राप्तम्, न च शाश्वतशान्तिर्विमलानन्दश्च सम्पन्नः । यदा च वयममुकस्यामुकनिलयाधिष्ठितस्य प्रख्यातस्य राधास्वामिमहाराजस्य समीपमव्राजिष्म । तदा दक्षिणकर्णे ×तन्मन्त्रोपदेशमात्रेणैव तत्कालमेव भगवद्दर्शनं जातम्, मोक्षस्य शान्त्यानन्दश्च प्रत्यक्षतश्चिरकालमनुभूतः । किं वर्णयामोऽस्माकं कृतार्थताम् । तन्महाराजस्य कीदृशो महिमा, कीदृशी च सिद्धिः ? केन कथं वर्णायितुं शक्येत ? तन्महाराजानुग्रहत एव दृष्टिपातमात्रेण जपध्यानादिकं विना, त्यागवैराग्यादिमन्तरा च निखिलो बहुकालादस्मदभिलषितः पुरुषार्थः सिद्धः । यथाऽस्माभिरनायासतः प्रशस्त ईदृशो लाभः संपादितः, तथैव भवद्भिरपि तत्समीपं गत्वा तादृशो लाभः संपादनीय इति । वयं भवतः साग्रहं वदामः ।

मूलपुरुषो राधास्वामी महाराज एव दीनदयालुः साक्षात् परमेश्वरोऽस्ति, नान्यः कश्चन । स एवास्मिन् कलियुगेऽमुकस्थानेऽमुकवंशे च दीनानां जनानां सद्यो मोक्षप्रदानाय दुःखेभ्यः समस्तेभ्यः समुद्धाराय चाविर्भूतः । गीतागायकः कृष्णस्तु न दयालुरपि क्रूरकर्मा काल एवास्ति+। अत एव गीतासु सः स्वयं स्वस्वरूपं कालरूपेण निखिलजनमारकत्वेन च वर्णयति-'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः ।' ( गी० ११।३२ ) इति । अतः सः तादृशोऽधःस्थितः कृष्णोऽपि तस्य सर्वत उपर्यवस्थितस्य परमदयालोः राधास्वामिनः सकाशात् स्वमोक्षं प्रार्थयते । गीतासु

×मन्त्रस्तस्येदृशः—'ज्योतिनिरञ्जन, ओंकार-रोरंकार-सोहं-सत्तनाम' इति ।

+रामकृष्ण दोउ जगमें आये । कालधरे औतारा (सारवचन० २२) त्यागो कृष्ण लवार, (मा० वा० २१)

कृष्णस्तु 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।' (गीता० ७।४५) 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।' (गी० ७। १६) इति ब्रुवाणोऽनेकजन्मकृतप्रभूतसाधनलाभेभ्यो मोक्षसिद्धिं वर्णयति । परन्तु अस्माकं महाराजस्तु अस्मिन्नेव जन्मनि तत्कालमेव साधनप्रयत्नमन्तरेण मोक्षं ददाति श्रद्धालुभ्य इति कृष्णतोऽस्य महाराजस्यास्ति महद्वैशिष्ट्यमिति तावदालोच्यताम् ।

अपि च–दम्भपाखण्डप्रचारं त इत्थं कुर्वन्ति । सभास्थितस्वानुयायिजनवञ्चनायैतादृशानृतवार्तां प्रकटयन्ति । कश्चन तत्प्रेरितो मिथ्यावादी सभायां सहसा समुत्थायेदं ब्रवीति–'अहो धन्योऽहं धन्योऽहं, मम जन्म सफलं जातम्, मम पितु र्मरणावसरे मया श्रीराधास्वामिमहाराजस्य प्रत्यक्षमद्भुतं दर्शनं कृतम् । तदा मम पितरं स्वभवतं समानेतुं दिव्यं विमानमधिरुह्य स भगवान् समागतवानिति । तच्च संस्मृत्य संस्मृत्य मे रोमहर्षश्च जायते । तद्वार्तां श्रुत्वा तत्पीठाधिष्ठितो महाराजो वदति–भो! श्रद्धाढ्य ! एतादृशी गुप्तरहस्यवार्ता त्वया सर्वत्र न प्रकटनीया, परमभाग्यशालिनं भवन्तं मन्ये, अतो भवान् सद्य उपविशतु, एवंभूतं मिथ्याप्रलापं श्रुत्वा तत्सभास्थाः सर्वे जनाः विस्मयमनुभवन्तः तत्पन्थे विशेषानुरागिणो भवन्ति । एतादृशानृतप्रचारोऽस्माभिस्तद्दलालद्वारा साक्षाच्छ्रुतः, अन्यैश्च सद्गृहस्थैरपि श्रावितः । अस्माभिस्तद्गुरुसमीपे प्रेषितः कश्चन समालोचकः, तच्छिष्यो भूत्वा तद्ग्रन्थान् तद्गुप्तमन्त्रं च समादायास्मभ्यमन्यैर्बहिर्भूतैः प्राप्तुमशक्यान् तान् दत्तवान्, मन्त्रश्च प्रदर्शितः, तत्सभावृत्तान्तो निखिलोऽपि निवेदितः । इति ।

## प्रणामी पन्थः

एतस्य पन्थस्यापि विचित्रास्ति विच्छेदभावना । तत्पन्था-

नुयायी कश्चित् कदाचित् पुरातनसंस्कारवशात् यदा हे राम ! रामेति हे श्रीनाथ ! हे रणछोडराय ! महादेव ! इति समुच्चरेत्, तदा तच्छ्रुत्वा तत्प्रखरानुयायिभिः सः सद्योऽधिक्षिप्तो भवति । किं भो ! त्वया कथ्यते ? न तथा कदापि वक्तव्यम्, महान् अपराधो भवति, राजसामाजीधणी, राजसामाजीधणी इत्येवं प्रेम्णा वक्तव्यम् । नान्यस्य कस्यचित् देवस्य नामान्युच्चारणीयानि न च तन्मन्दिरेषु गन्तव्यम् । स्वमतप्रणेतृप्राणनाथप्रणीतस्य स्वरूपसाहेबेतिनामधेयस्य पूज्यस्य स्वधर्मग्रन्थस्यैव श्रद्धया पाठो विधेयः, न गीताभागवताद्यन्यधर्मग्रन्थानाम् । तेषामेतादृशी विच्छेदभावना हिन्दुसंघट्टनं विरुणद्धि ।×

## पीराणापन्थः

अयमपि पन्थः केनचित् मुसलमानेन पीरेण प्रवर्तितः गुर्जरे सौराष्ट्रे कच्छदेशे च प्रचलति । निम्नकोटिषु परिगण्यमानाः सरलहृदयाः विशिष्टसंस्कारहीना निरक्षराः अन्धश्रद्धालवो हिन्दव एव रबारीकाछियाकणबीहरिजनप्रभृतयः एतस्य पन्थस्यानुयायिनो भवन्ति । तत्पन्थसाधवः तत्पन्थप्रणेतारं मुसलमानपीरमुद्दिश्य यद्वा तद्वा किमपि गप्पाष्टकं कपोलकल्पितमपि विश्वासोत्पादनाय यथार्थतया कथयन्ति । यस्यात्र गद्दी वर्तते, सोऽयं किल पीरः हिन्दुचतुर्विंशत्यवताराणामप्यस्त्यवतारीभूतः । गुर्जरदेशस्य प्रसिद्धेऽहमदाबादनगरेऽपि तस्य पीर गद्दीस्थानं वर्तते, एवमन्यत्रापि । आर्यहिन्दवः स्वपुरातनश्रद्धेयसमुदारसंस्कृतिं हित्वा यवनानां संस्कृतिं किं ? दुष्कृतिं यथाऽभिगृह्णीयुरिति तत्तात्पर्यम् । स्वान् सर्वोच्चमभिमन्यमानाः पण्डिताः साधवश्च स्वबन्धूनां विच्छेदं स्वनेत्रै र्दृष्ट्वाऽपि न

× एतत्सर्वमितिवृत्तं तत्पन्थप्रचार पत्रिकासु मयाऽवलोकितम् ।

विषीदन्ति; शूद्रत्वात् नीचत्वादसंस्पृश्यत्वाच्च प्रोत्तमवर्णानां मन्दिरेषु गन्तुमशक्नुवन्तः सनातनधर्मरामायणगीतादिशिक्षा-रहिता अपि ते धर्ममोक्षाभिलाषावत्त्वात्-तस्मिन् मुसलमान-प्रवर्तित-पन्थे निर्बाधतया प्रवेष्टुं वाञ्छन्त्येवेति तत्र तेषां कोऽप-राधः ? । अत एव ते वञ्चकास्तान् मिथ्यावाग्जालं चमत्कार-वैशिष्ट्यं प्रसार्य तत्र प्रवेशयन्त्येव ।

## समन्वय-भावना

सर्वेषां रुचिवैचित्र्यात् संजातभेदानां विविधपन्थानामनेक-संप्रदायानाञ्च मिथः समन्वयभावनाऽत्यावश्यकी । या हि प्रिय-राष्ट्रस्यैकत्वसिद्धये प्रभवेत् भवन्तु नाम विविधानि साधनानि, विलक्षणाश्च रुचिप्रभेदाः, परन्तु परमलक्ष्यस्यैकत्वमभ्युपगम्य सर्वैरपि साधुजनैः राष्ट्रैकत्वसाधकः प्रबलः समन्वयो विधा-तव्यः। मिथोवादविवादनिन्दासंघर्षादिना जायमाना या विच्छेद-भावना, साऽस्मदीयस्य राष्ट्रस्यास्पृहणीयमेकत्वं विनाशयति । राष्ट्रैकत्वस्य विनाशे सति निखिलमप्यभीष्टं विनष्टं, तस्मिन् प्रयत्नतो रक्षिते सति सर्वमेव च तद्रक्षितं भविष्यति । अतः प्रियराष्ट्रैकत्वरक्षणाय सर्वैरपि साधुजनैः-अवान्तरमतभेदं दम्भा-भिमानौ च विहाय परस्परं प्रेमसद्भावविनयविवेकौदार्यसौहा-र्दादिकं सद्गुणजातं देशसमाजहितकरञ्चावलम्ब्य सर्वतोभावेन समन्वयभावनायां सन्नद्धैर्भवितव्यम् । ये हि परस्परं प्रबलभेद-भावविशिष्टाः सन्ति, तन्मूलकेर्ष्यास्पर्धादिदोषाढ्याश्च भवन्ति, ते खलु स्वकीयं यथार्थं धर्ममपि पालयितुं क्षमाः न भवन्ति, न च विमलं सुखं, स्तुत्यं गौरवं, नितान्तस्पृहणीयां शान्तिमपि च प्राप्तुं कथमपि शक्नुवन्ति । यदाह-महाभारते उद्योगपर्वणि महात्मा श्रीविदुरः—'न वै भिन्ना जातु चरन्ति धर्मं, न वै सुखं

प्राप्नुवन्तीह भिन्नाः । न वै भिन्ना गौरवं प्राप्नुवन्ति, न वै भिन्नाः प्रशमं रोचयन्ति ॥' (म० उ० ३६।५६) इति। भिन्नाः =भेदभावविशिष्टाः, प्रशमं=शान्तिं ।

अपि च भेदभावविशिष्टाः जनाः शास्त्राणां निष्पक्षमहात्मनाञ्च हितकराः सूक्तीः अपि रुच्या न शृण्वन्ति । अत एव परस्परं कलहायमानानां तेषां भिन्नानां योगक्षेमावपि न सिद्ध्यतः । विनाशं विहाय तेषामन्या गति र्न विद्यते, तदेतदुक्तं महात्मना विदुरेण तत्रैव—'न वै तेषां स्वदते पथ्यमुक्तं, योगक्षेमं कल्पते नैव तेषाम् । भिन्नानां वै मनुजेन्द्र ! परायणं, न विद्यते किञ्चिदन्यद् विनाशात् ।' (म० उ० ३६।५७) इति। पथ्यं=हितकरं, स्वदते=रुचिकरं भवति । परायणं=अन्तिमा गतिः। अत एव 'अन्योऽन्यसमुपष्टम्भाद् अन्योऽन्यापाश्रयेण च । ज्ञातयः (साधवः) सम्प्रवर्धन्ते सरसीवोत्पलान्युत ॥' (म० भा० उ० ३६।६५) इति अन्योऽन्येषां समुपष्टम्भात्=प्रेमसद्भावमिलनाभेदभावादिभिः एकत्र सम्बद्धत्वात्, अन्योऽन्यापाश्रयेण=परस्परसाहचर्यात् । संप्रवर्धन्ते=शोभनशान्तिसुखाद्यभिवृद्धिं प्राप्नुवन्ति ।

अत एव स्वतन्त्रभारतराष्ट्रस्य कर्णधारा गौरवशालिनः पण्डितजवाहरलालनेहरुप्रभृतयः प्रमुखनेतारो महतः स्वराष्ट्रस्यैकत्वविघातकमनर्थकरं तत्तज्जातिसंप्रदायादिभेदं कथमपि न वाञ्छन्ति, किन्तु तं सयुक्तिकप्रामाणिकवचोभिः खण्डयन्तीति तत्तत्पत्राकाशवाणीसमाचारविदां न तिरोहितम् । सति चैवं 'अस्पर्शयोगो वै नाम, सर्वसत्त्वसुखो हितः । अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥' ( गौडपादकारिका ) इत्यनेन यस्य विवादविरोधनिवारकं प्रशस्तं महत्त्वं भगवत्पादाचार्यशंकरस्य परमगुरुभिर्गौडपादाचार्यैरभि-

वर्णितं—तं केवलाद्वैतवेदान्तसिद्धान्तमवलम्ब्य साक्षिरूपेण सर्वानुगतस्य नित्यस्य स्वात्मन एकत्वं, विश्वनियन्तुः परमेश्वरस्य चैकत्वमभ्युपगम्य सर्वत्र समन्वयभावना स्थापनीया ।

अपिचाखिलनामरूपात्मकस्य संसारस्य मिथ्यात्वं शरीरादीनाञ्च नश्वरत्वं दृढीकृत्य यज्ज्ञानात्सर्वानर्थनिवृत्तिः परमानन्दावाप्तिश्च भवति,तत्रैव परिपूर्णसच्चिदानन्द-त्रिकालाबाध्यवस्तुनि सर्वाभिन्न एव मनो देयं, तत्साधने आर्जवदयाशान्तीश्वराराधनादौ निष्कामकर्मणि च, नान्यत्र कल्पितभेदे तत्प्रयोजित-खण्डनमण्डन-परनिन्दास्वस्तुत्यादौ निष्फलव्यापारे चेति समदर्शिनां विनयविवेकवतां साधूनामयं प्रशस्तः समुपादेयः पन्था इति सर्वमनवद्यम् ।

## उपसंहारः

संप्रति स्वतन्त्रे कांग्रेसप्रशासिते भारते राष्ट्रे विविधाः समाजाः विभिन्नाश्च पार्टयः समुपलभ्यन्ते । यथा कांग्रेस-सोशलिस्ट-कम्युनिष्ट-जनसंघ—हिन्दुमहासभा—राष्ट्रीयस्वयंसेवकसंघ-आर्यसमाज-सनातनधर्मसभाप्रभृतयः । तेषामत्र प्रतिपादिताः विविधाः विभिन्नाश्च पक्षाः सन्ति । अस्माकं विशालनिष्पक्षपातभावभूषितानि प्रमाणभूतानि-श्रुतिस्मृतिपुराणादीनि शास्त्राणि हितशासकानि, सर्वेषां तेषां पक्षाणां 'पुष्पकविमानवत्' अवकाशं ददति । अत एव तत्तत्प्रमाणवचांस्यत्र प्रियपाठकैः तत्तत्पक्षसमर्थनायोपक्षिप्तान्यवलोक्यन्ते । भारतभूदेव्याः यथाऽखण्डाभ्युदयो भवेत्, महनीयं गौरवञ्च प्रसिद्ध्येत् । चीनपाकिस्तानादिशत्रूणामाक्रमणस्य संमिलिताः संघट्टिताः पावनभारतभूवास्तव्याः सर्वेऽपि आर्यजनाः विद्याबलधनादिविविधशक्तिसम्पन्नाः सन्तः प्रतीकारं यथा विदध्युः, स्वप्राणप्रियराष्ट्रस्य

स्वातन्त्र्यं यथा सर्वाभिः शक्तिभिरभिरक्षेयुः। सर्वविधामभ्युन्नतिं यथा प्राप्नुयुः। विविधान् मिथ्याभिमानादिदोषान् विनिवार्य, मिथो निःस्वार्थ-प्रेमसद्भावसहानुभूति-संयमविनयविवेकादिसद्-गुणैः शुभकर्मभिश्च विभूषिता यथा भवेयुः। एतदर्थमेव शास्त्र-युक्त्यादिसमलंकृताः पूर्वोक्ताः विविधाः पक्षाः संकलय्यास्माभिः प्रदर्शिताः। तेषु कस्मिन्नपि पक्षे एतत्पक्षसंग्रहकर्तॄणामस्माकं नास्ति कश्चनाप्यभिनिवेशः इति प्रारम्भेऽपि प्रदर्शितम्। अत एवात्र नास्ति कश्चनास्माकं पक्षो वा सपक्षो वा विपक्षो वेति तथ्यं वचः सर्वैरपि बोद्धव्यम्। सति चैवं विभिन्नरुचयो विद्वांसः कस्यापीष्टस्यात्रत्यस्य वाऽनिष्टस्य सपक्षस्य विपक्षस्य च खण्डनं वा मण्डनं वा कर्तुं वाञ्छन्ति चेत् ? ते यथेष्टं खण्डयितुं वा मण्डयितुं वा शक्नुवन्ति, इत्यत्र नास्त्यस्माकं कश्चन विवादो वा विरोधो वा काचन वा क्षतिरित्यवधेयम्। अपि चात्र तत्त-न्मताभिनिवेशवशात् कश्चिदपि शास्त्रवचनानां याथार्थ्येन भासमानोऽर्थो न हि निगूहितः। यथाबुद्धिस्फुरितमेव तु रहस्य-मुपनिबद्धमिति निष्पक्षपातैर्विद्वद्वरैः समीक्ष्यताम्।

## दोषदर्शनतात्पर्यम्

प्राक्कालिके भारते ये ये विविधा दोषाः—'कथंचित् कदा-चित् अतिशयोक्तिपूर्णा अपि स्युः'—प्रदर्शिताः। तत्प्रदर्शनस्ये-दमेव तात्पर्यं वेदितव्यम्। यद्गतं तदगतमेव भवति, अतीताः दोषाः अतीतत्वादेव कथं हेयाः स्युः? अतो 'हेयं दुःखमनागतम्।' (यो० सू० २।१६) इति न्यायेन-यथा गतस्य दुःखस्य संप्रत्य-विद्यमानस्य हानासंभवादेव, अनागतं=भविष्यदेव दुःखं हेयं भवति। यथा—भविष्यतो दुःखस्य प्रादुर्भावो न स्यात्, तथा तत्समुत्पादककारणहानेनानागतं दुःखमेव हेयं भवितुमर्हति।

तथा भविष्यत्काले ते तेऽतीताः दुःखप्रदाः दोषाः, यथा न संभवेयुः, तथा सर्वैरपि भारतभूवास्तव्यैः आर्यहिन्दुभिः प्रयतनीयम् । मलिनवस्त्रस्येव दोषज्ञानतन्निरासमन्तरा कथं सद्गुणानामाधानं स्यात् ? अत एव दोषज्ञः पण्डितो भवति, तन्नामसु 'विद्वान् विपश्चित् दोषज्ञः सन्सुधीः कोविदो बुधः ।' (२।७।५) इत्याद्यमरकोशोक्तेषु पर्यायरूपेण तस्य गृहीतत्वात् । यः किल स्वदोषानेव न जानाति, सः कथं तन्निवारणाय प्रयतेत ?। तथा च तन्निवारणाय तज्ज्ञानमावश्यकम्; यथा पूर्वपक्षज्ञानं विना तन्निवारणपूर्वकं स्वपक्षस्थापनं विचक्षणोऽपि शास्त्रज्ञो न कथमपि कर्तुं शक्नोति, तथाऽत्रापि वेदितव्यम् । पारतन्त्र्यदौर्बल्यविच्छेदभावादयो दोषाः, स्वातन्त्र्यसबलत्वसंघट्टनादयो गुणाः प्राक् प्रदर्शिताः । अतएवोक्तं–'उत्थानं विनिपातश्च, संसारे परिवर्तिनि । सर्वेषां भवतोऽवश्यं, पर्यायान्नियतेः क्रमात् ।। प्रागेतद्भारतं दृष्ट्वा स्वदोषैः पतनोन्मुखम् । वैदेश्यैरधरीकृत्य त्वापादतलमापितम् ।। अधःपातपराकाष्ठां प्राप्तस्यास्य समुन्नतेः । कालोऽयमागतो जीयाद् हिन्दुराष्टमिदं पुनः ।। आपितं= प्रापितमित्यर्थः ।

## प्रमोदावसरः

अपि च भारतभूवास्तव्यानां कृतेऽयं महान् प्रमोदः प्रभूतश्च संतोषः समजनि । योऽयं प्रियभारतदेश आर्यावर्तो भगवद्विविधावतारप्रादुर्भावस्थलभूतोऽपि बहुकालात् पराधीनो विविधदुर्दशाग्रस्तः श्रीमन्महात्म-गान्धीमहोदय-पण्डितनेहरू-सरदार-पटेल–लोकमान्यतिलक–मालवीय–राजेन्द्रप्रसाद–लाजपतराय–चित्तरंजनदास-विट्ठलभाईपटेल-सुभाषबाबू-प्रभृतीनां भूयसां देशनेतॄणां त्यागप्रज्ञापुरुषार्थसौहार्दप्रमुखप्रशस्तगुणैः जनतायाश्च

मिथः प्रेमसद्भावपूर्णसंघशक्तिप्रभावेण च स्वतन्त्रोऽभूत्, विदेशीयशासनञ्च नष्टमभूदिति। अत एव स्वतन्त्रताप्रियाः भारतीयाः आर्यहिन्दवः-अतीतकालदुर्दशाकारणानि परस्परविच्छेदभावाभिमानद्वेषेर्ष्यावैरादीनि सर्वथा विनाश्य मिथः प्रेमसद्भावनैतिकबलसंघट्टनसंयमपराक्रमस्वार्थत्यागविद्याविनयादिसद्गुणान् विधार्य स्वप्रियराष्ट्रस्य स्वातन्त्र्यं यथा सर्वतोभावेनाभिरक्षेयुः, तथा विश्वनियन्ता लोकलीलासूत्रधारो भगवान् श्रीविश्वनाथस्तान् अनुग्रहीतुमस्माभिः पौनःपुन्येन श्रद्धया प्रार्थ्यत इति।

## प्रशस्तिः समाप्तिर्विज्ञप्तिश्च

जयतात् भारतो देशो यस्योदारा च संस्कृतिः।
उदारो वैदिको धर्मो ब्रह्मात्मैकत्वमण्डितः ॥ १ ॥

सौभाग्यशालिनी यस्य पुण्या भूमिर्वसुन्धरा।
धत्तेऽन्यदात्मनो नाम 'रत्नगर्भे' ति सार्थकम् ॥ २ ॥

यस्य स्वादूदका नद्यो गंगारेवादयोऽमलाः।
हिमविन्ध्यादयः सन्ति भूधरा भूरिसंपदः ॥ ३ ॥

ऋतवो यत्र राजन्ते क्रमात् संभूय सर्वदा।
यत्सस्यफलसम्पत्या स्वर्गोऽपि स्यात्तिरस्कृतः ॥ ४ ॥

रामकृष्णादयो यस्य बभूवुश्चोत्तरे शुभाः।
आचार्याः शंकराद्यास्तु दक्षिणे लोकशिक्षकाः॥ ५ ॥

हिन्दुसमाजतद्धर्म-संस्कृतिगौरवं वयम् ।
पूर्वजानाञ्च माहात्म्यं, सादरं वै वृणीमहे ॥ ६ ॥

अभीष्टं तत्समाक्रान्तं, दोषैर्दुःखप्रदैरभूत् ।
दोषाघातो भवेद्यस्मात् सद्गुणानां हि सञ्चयात् ॥७॥

तथा विश्वेश्वरो देवः सामर्थ्यं भारते प्रिये ।
दत्त्वा चानुग्रहं कुर्यात् प्रार्थनैषा विधीयते ॥ ८ ॥

विवेचका हि विद्वांसः, समीक्षां ग्रन्थरूपिणीम् ।
आमूलचूडमभ्यस्य तात्पर्यमधिगम्यताम् ॥ ९ ॥

दोषनाशगुणाधान-लक्षणं निखिलेप्सितम् ।
मात्सर्यञ्च परित्यज्य नन्दन्तु हितचिन्तकाः ॥१०॥

कृता महेश्वरानन्द-स्वामिना यतिना शुभा ।
शास्त्रीयान् विविधान् पक्षान् ,संकलय्य यथामति॥११॥

विना शास्त्रप्रमाणानि,न कोऽप्यर्थोऽस्ति निश्चितः ।
अतः शास्त्रप्रमाणैश्च, तदनुरोधियुक्तिभिः ॥१२॥

कर्तव्यो निर्णयोऽर्थानां शास्त्रयुक्तिविभूषितः ।
निर्विशंकमयं ग्रन्थस्तत्संग्राह्यो बुभुत्सुभिः ॥१३॥

एकं चापि यथा ह्यन्नं नानारूपेण साधितम् ।
रोचते स्वदते चैवं, पक्षाः भिन्नाः नवार्थकाः ॥१४॥

रुचिवैचित्र्यसंजाताः मतभेदाः लोकशास्त्रयोः ।
तत्तत्परम्पराप्राप्ताः पन्थाः ग्रन्थेऽत्र संचिताः ॥१५॥

इति कनखल-हरिद्वार-वास्तव्य-श्रीमत्परमहंसपरिव्राजकाचार्य-महामण्डलेश्वर-श्रोत्रिय-ब्रह्मनिष्ठ-अनन्तश्रीविभूषित-स्वामिश्री-महेश्वरानन्दमहाराजप्रणीता-चातुर्वर्ण्य-भारत-समीक्षा संपूर्णा ।

हरिःॐतत्सत् ॐनमः शिवाय
शिवः सर्वम्, शिवोऽहम् ।

## एतद्ग्रन्थलेखप्रणीतानीमानि पुस्तकानि

(१) ऋग्वेदसंहितोपनिषत्–अध्यात्मज्योत्स्नाविवृत्युपेता
(२) यजुर्वेदसंहितोपनिषत्– ,,
(३) अथर्ववेदसंहितोपनिषत्– ,,
(४) सामवेदसंहितोपनिषत् ,, (अप्रकाशिता)
(५) श्रीमद्भागवतसंहितोपनिषत् ,, (खण्डद्वयम्)
(६) गीताप्रवचनसुधा ( हिन्दी एवं गुजराती )
(७) दक्षिणतीर्थयात्रा ,,
(८) सिद्धान्तद्वयसमीक्षा ( हिन्दी )
(९) पुनीत संस्मरण ,,
(१०) हरगोविन्ददासव्याख्यानमंदिर ( हिन्दी )
(११) गायत्रीमीमांसा संध्योपासनं पुरुषसूक्त–श्रीसूक्त
(१२) गीताव्याख्यानसमीक्षा ( अप्रकाशिता )
(१३) श्रीशंकरसूक्तिसुधा
(१४) सवार्तिकं पंचीकरणम्
(१५) भगवत्प्रसाद, सद्गुरुप्रसाद इत्यादि

# श्रीमहेश्वरानन्दाभिनन्दनम्

अबोधलोकान् अमृतोपदेशतः,
प्रकारयन् तान् परमार्थदर्शनम् ।
प्रबोधयन् ज्ञानप्रकाशदानतो,
महेश्वरानन्दयतिर्विराजताम् ॥१॥

आनन्दकन्दमुनिवृन्दसुवन्दितश्री–
पादारविन्दमकरन्दकदम्बरेणुः ।
जीयात् स साधुजनतासमताविभूतिः,
श्रीमण्डलेश्वरमहेश्वरसौम्यमूर्तिः॥२॥

वेदान्तसिद्धान्तप्रचारलीनः,
कैवल्यविद्यामनने प्रवीणः ।
संसारमायामदमोहहीनः,
सद्धर्ममार्गे रमते मुनीनः(महेशः)॥३॥

गांभीर्यौदार्यधैर्यस्खलितजलनिधिर्विश्वकीर्तिर्वरेण्यः ।
सौजन्याचारबोधैर्विलसितचरितो मण्डलेशो महेशः ॥
वेदान्ते सर्वशास्त्रे विशदमतिगतिः प्राप्तविद्यानुभूतिः।
श्रीमान् स्वामी जयति यतिवरः कोऽपि स्वानन्दमूर्तिः॥४॥

—( **कश्चन चित्तौडवास्तव्यः पण्डितप्रवरः प्रणेतैषाम्** )

## भगवतो वेदस्य समुदाराः सदुपदेशाः

'सा मा सत्योक्तिः परिपातु विश्वतः' ( ऋ० १०।३७।२ )
'सुगा ऋतस्य पन्थाः' ( ऋ० ८।३१।१३ )
'सत्यमूचुर्नर एवाहि चक्रुः' ( ऋ० ४।३३।६ )
'न स सखा यो न ददाति सख्ये' ( ऋ० १०।११७।४ )
'वयं राष्ट्रे जागृयाम पुरोहिताः' ( शु० यजुः ९।२३ )
'भूत्यै जागरणम्, अभूत्यै स्वपनम्' ( शु० यजुः ३०।१७ )
'आरोहणमाक्रमणं जीवतो जीवतोऽयनम्' ( अथर्व० ५।३०।७ )
'परैतु मृत्युरमृतं न एतु' ( अथर्व० १८।३।६२ )
'उप सर्प मातरं भूमिम्' ( ऋ० १०।१८।१० )
'स्वस्तिपन्थामनुचरेम, सूर्याचन्द्रमसाविव ।।' ( ऋ०५।५१।१५ )

---

×अयमर्थः—सर्वभूतहितलक्षणं सत्यं, तस्योक्तिः=कथनं, विश्वतः= सर्वतः, मा=मां पातु=रक्षतु । ऋतस्य=सत्यस्य पक्षपातादिदोष-वर्जितस्य शास्त्रतर्कशिष्टपरीक्षितस्य पन्थाः=मार्गः, सुगा=सुखेन गन्तुं योग्यो निरुपद्रवः सर्वजनहितकरोऽस्तीति वेदितव्यम् । ये सत्यं=यथार्थं ऊचुः=वदन्ति जगुर्वा, एवं सत्कर्म परोपकारादिकं चक्रुः=कुर्वन्ति—अकार्षुर्वा त एव हि नरः=मान्या नेतारो भवन्तीत्यर्थः । सखा=मित्रं वन्धुः तस्मै यो सन्मतिसहायादिकं न ददाति, स न सखाऽपि तु स्वार्थी नीच एव । पुरोहिताः=राष्ट्रहितमेव लक्ष्यं कृत्वा अग्रेसरा नेतारः सन्तो वयं सदा सावधाना भवेम । जागरणं=सब्दोधपूर्वकः सुप्रयत्नः, स्वपनं=मौढचपूर्वकमालस्यादिकं, भूत्यै=अभ्युदयाय—ऐश्वर्याय—सुयशसे परमानन्दाय वा । जीवतो जीवतो=प्रत्येकजीवस्य, अयनं=लक्ष्यं, आरोहणं=सद्गुणेषु स्वातन्त्र्यसमुन्नत्यादिषु वा, आक्रमणं=दोषेषु पारतन्त्र्यादिषु दुष्टेषु वा । परैतु=दूरं गच्छतु, नः=अस्माकं एतु= प्राप्नोतु । मातृभूमेः समुन्नतये त्वमुपसर्प=स्वसहायादि प्रदातुं समीपं गच्छ । सूर्य इव तेजस्वी सन् चन्द्र इव शीतलः—अनुद्विग्नः सन् कल्याणमार्गं अनुसरेम वयम् ।

---

प्रकाशकः-श्रीस्वामी कैवल्यानन्द सरस्वती महाभागः ।
मुद्रकः-जी० आर० पाल, अध्यक्षः-गुरुकुल मुद्रणालयः, गुरुकुलकांगड़ी ।